# द्वे मुखे

जगन्नाथस्य द्वयोर्वदनयोर्निःसृतं काव्यद्वयं संपुटेऽस्मिन् निहितं पाठकाः पठितुमर्हन्ति-

१.प्रथमाद् वदनान्निःसृतं मोघदूताख्यं खण्डकाव्यं मन्दाक्रान्तानिबद्धं यत्र-

प्रेमप्रकटनप्रयत्ने वैफल्यम् अनुभवन् कश्चिद् युवा गान्धिटोपीं दूतीं कृत्वा नायिकायै संदेशं प्रहिणोति।

२.द्वितीयाच्च वदनान्निःसृतं लोकालङ्कारपङ्क्तीयाख्यं काव्यं श्लोकनिबद्धं यत्र-

द्वादशोत्तरं शतं नवीना अलङ्काराः सलक्षणलक्ष्याः सन्ति।

DVE MUKHE by Jagannatha consists of the following two poems in Saṁskṛta:

1. *Moghadūta* (not *Meghadūta*), a humorous work ridiculing love (written in *Mandākrāntā* metre)
2. *Lokālaṅkāra-paṅkīya,* a work of humorous figures of speech containing 112 examples with definitions (written in *Anuṣṭubh* metre).

मूल्यम्: भावयित्री प्रतिभा।


INTERNET
May 2013




# द्वे मुखे



द्वे लघुनी काव्ये

## जगन्नाथः


अन्तर्जालम्
मे २०१३

# द्वे मुखे

**जगन्नाथस्य द्वे वदने :**



**१.मोघदूतम् २.लोकालङ्कारपङ्क्तीयम्**

**अन्तर्जालम्**
२०१३

namely,
ng
ṅkīya,
xam-

*Dve Mukhe* is collection of two short Saṁskṛta poems: 1.*Moghadūta*(not *Meghadūta*), a work ridiculing love(composed in *Mandākrāntā*). 2. *Lokālaṅkāra-paṅkīya*, a work of 112 *arthālaṅkāra*s created afresh by the author for *hāsya*.

Author: S.Jagannatha
Type setting, Layout, graphics and coverpage design: Author.


Published first time at INTERNET.
May 2013

अधुना प्रकाशमाप्नुवाने द्वे काव्ये हास्यस्य काञ्चिन्नवीनां भङ्गीं प्रदर्शयत इति विश्वसिमि।

इदं वक्तव्यं मोघदूते-

प्रेम्णि, राजकीये तथा शिक्षणे च सोत्प्रासा उक्तयो काव्यस्यास्य जीवातुः।एतच्छन्दस्वत्यां प्रथमद्वितीययोः संचिकयोः प्रकटितपूर्वम्। अधुना दीयमानं रूपमेतदीयं लोपागमादेशैः क्वाचित्कं व्यत्यस्तमाकारं धारयति।छन्दस्वत्याः संपादकस्तत्रभवान् न्यायविद्वान् श्रीमान् उमाकान्तभट्टपण्डितो भाजनं मम कृतज्ञतायाः।

लोकालङ्कारपङ्कीये तु-

विविधा आधुनिकजीवनक्रमा विशिष्य शासकीया व्यवहाराः कटाक्षिताः।प्रायो द्वाविंशतिवर्षेभ्यः पूर्वं संविदि प्रकाशनदशां गमित-मासीदेतत्।संवित्कारः स्मर्यते सादरम्।

अधुना द्वयोरपि समुच्चित्य प्रकाशनम् अन्तर्जाले क्रियते, प्रकाशकस्य कस्याप्यनुपलब्धेः।लब्धे च प्रकाशके द्वयोरपि मुद्रणं कारयिष्यते।

**एता द्वित्रा वाच एतयोः कृत्योः प्रणेतुर्जगन्नाथस्य।**

मे २०१३

# मोघदूतम्*

## पूर्वमोघः

१.कश्चिन्मार्गे क्वचन तरुणीं दृष्टवान् काञ्चिदात्त-
प्रेमभ्रान्तिः परमकुतुकात् प्राह तस्याः पुरस्तात् ।
''बाले ! प्रेष्ठे ! त्वमसि मम हृत्सन्निविष्टे''ति ; रुष्टा
साऽदादस्मै बत, शिव! शिव! द्राक् कपोले चपेटाम् ॥

२. स्रष्टुं प्रेम्णि प्रभवतु कथं सा जडा दार्ढ्यहानिं ?
किं जानाति प्रकृतिकठिनं प्रेमिणस्तावतैव ।
नैव द्वैधीभवति हृदयं खण्डशो भव्यरूपं
यस्मिन्नस्ति प्रणयकणिकाश्रेणियुग् रागरोगः ॥

३.चूते फुल्लत्वखिलजनताविस्मयः कोविदारः
प्राचीं त्यक्त्वा दिशमितरदिक्ष्वर्यमाऽऽप्नोतु जन्म।
पञ्चप्राणान् प्रणयपिटके स्थापयन् आत्तनिद्रः
स्वप्नानेष त्यजतु किममून् प्रीतिकूटाधिरूढान्?॥

* मोघो व्यर्थो दूतः आरोपितदूतत्वरूपधर्मः पदार्थष्टोपीरूपो यस्मिन् काव्ये तन्मोघदूतम्।

३.'चूते कोविदारस्य जन्म, पश्चिमस्यां दिशि सूर्यस्योदयो वा संभवेन्न तु प्रेमातिरेकवति युवके प्रेमभङ्ग'इत्यर्थः। अर्यमा-सूर्यः।

४.वेतण्डास्यप्रणयनरतो वानरस्येव कर्ता
शुण्डास्थानभ्रमबहुलताहेतुतो रक्तिमाणम् ।
क्लृप्तस्वान्तः किल कलयितुं कन्यकायाः कपोले
लब्धोद्योगोऽसृजदहह! तं स्वे! - विधिर्दुष्टवर्त्मा ॥

५.'प्रेमिस्वान्तं हृदयमधुरोद्गारभावानभिज्ञा
जानात्वेषा कथमतिरुषा दूषिता बन्धुराङ्गी? ।
प्रेमज्वालानलकलुषिते कापथे पातिताऽस्याश्
चित्ताकारा द्रवतु हि शिला कार्ययुक्त्या कया वा ?' ॥

६.एवं चिन्ताजलधिपतितः स्वोद्धृतौ बद्धदीक्षं
कञ्चित् कोलं भृशमत इतोऽन्विष्य मिथ्याख्यरङ्गे ।
नित्यं नृत्यं किल विदधतीं बाह्यशुभ्रां तथाऽन्तर्
गालीहिंसाकुसृतिमलिनां गान्धिटोपीं ददर्श ॥

७.टोपीं दृष्ट्वा हृदयकमलब्रध्नकल्पामनल्पां
प्रीतिं यातः सपदि युवक-भ्रान्तिमार्गस्य पान्थः ।
टोप्यालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतो
मर्त्यः किं स प्रणयजपकृत् कन्यया ताडितो यः ॥

४.वेतण्डास्यः-गजाननो गणेशः।
६.कोलम् उडुपम्। कोलस्तु समुद्रे प्लवते परन्तु नौकेव समुद्रे नात्यन्तमपेक्ष्यते तस्य लघुत्वात्। गाली-निन्दा। कुसृतिः-वञ्चना। बाह्यशुभ्राम्-बाह्यभागे शुभ्राम्।
७.ब्रध्नः सूर्यः।





८.हस्तद्वन्द्वं स्वहृदयसमैरश्मभिः पूरयित्वा
व्यादायास्यं सपदि कुतुकी स्वागतं प्राह टोप्यै ।
अस्तव्यस्तैः कथनमथ चारब्धवानर्थहीनैर्
मूढस्तुत्यैः पदसमुदयैर्वक्ष्यमाणप्रकारम् ॥

९.खादीवस्त्रैर्जननपदवीं प्रापिता कुत्र टोपी?
संदेशाः क्व प्रणयजडधीजन्तुभिः प्रेषणीयाः? ।
इत्यौत्सुक्यादपरिगणयन् तां स मूर्खो ययाचे
प्रेमोन्मत्ता मननमलिनाश्चेतनाचेतनेषु ॥

१०.''निर्मस्तिष्कव्रजशिरसि सद्रत्नभूषायमाणे!
टोपि! प्रापि प्रचुरसुकृतैर्दर्शनं ते मदीयैः ।
कुड्यं काष्ठां बधिरपुरुषं वीक्ष्य यद् भाषणाश्म-
प्रक्षेपेण व्यथयसि भुवं कण्ठशोषैः कृतेन ॥

११.''पादैर्हीने! नयनरहिते! श्रोत्रनासावियुक्ते!
टोपि! श्रीमान् सकलमहिमा श्वेतिमा केवलस्ते ।
आक्रान्तुं यं कुसृतिविषये धूर्ततायां च शक्तं
स्वप्नेऽप्यन्यत् किमपि सकले भूतले वस्तु नेक्षे ॥

८.व्यादाय-तिर्यगत्यन्तं विस्तृतं यथा स्यात्तथोद्घाट्य।
१०.निर्मस्तिष्का इति राजकीयानां जनानां संज्ञा। धूर्तत्वादिदुर्गुण-युक्तानामपि तेषां विद्याबुद्धिहीनत्वान्मस्तिष्कशून्यत्वमत एव संगच्छते।

१२.‘‘पूर्वं पद्यासदनगृहिणी यस्य कस्याप्यशुद्धे
पादद्वन्द्वेऽनवधि विहितामर्शना त्वं ततश्च ।
कस्याप्यास्ये विरचितघृता सांप्रतं याऽसि साऽसि
क्लेशे सत्यप्यवरयतनैः सिद्धिरासादनीया ॥

१३.‘‘स्वीयप्रज्ञाश्रयणजनितध्येयमार्गप्रकाशाः
केचिद् धन्या अविहितपरप्रार्थनाः सिद्धसाध्याः ।
मन्दप्रज्ञोऽहमिह भवतीं प्रार्थये भव्यबुद्धिं
हृन्मीनं ते वचनबडिशैराकृषन् मन्दमन्दम् ॥

१४.‘‘एष स्तौमि स्फुटमभिनयन् नाटकं प्रीतिसंज्ञं
स्तुत्या तोषं यदि भजसि संदर्शितस्वीयदन्ता ।
‘निर्विद्या अप्युरुमधिगताः शिक्षणामात्यभावं
भावत्काब्जद्वयजयिपदद्वन्द्वभृङ्गीभवन्तः ॥

१२.पद्या-मार्ग एव सदनं तत्र गृहिणी ।भिक्षुकीति यावत्। विहितामर्शना-विहितस्पर्शा। अयं भावः-भूतपूर्वभिक्षुकी सत्यपि अवैधैः कर्मभिरधुना धनिका संजाताऽसि। सति क्लेशेऽवरैर्यतनैः-प्रयत्नैरनुत्कृष्टैः कर्मभिः कथंचिदस्माकं सिद्धिः साधनीया।
१३.पूर्वार्धस्यायं भावः-प्राज्ञाः स्वकीयां प्रज्ञामाश्रयन्ति। अहं त्वामाश्रयामि मन्दप्रज्ञत्वान्मम। बडिशैः-मत्स्यग्रहणार्थैस्त-दाकर्षणोपयुज्यमानैर्भक्ष्यवस्तुविशेषैः।
१४.एष स्तौमि-अधुना स्तोत्रं प्रारभ इत्यर्थे प्राचीनः प्रयोगः। ‘अयमागच्छामि’ इत्यादिवत्। निर्विद्याः-विद्याशून्याः। उरुम्-श्रेष्ठम्। ...भृङ्गीभवन्तः शिक्षणामात्यभावम् अधिगताः ।





१५.‘‘-‘त्वत्पादाब्जभ्रमरितपरोपायवेण्यां श्रुतायां
स्थानप्राप्तौ भवति विशये शीर्षकीटायमाने ।
भक्तस्य स्यात् किमिह शरणं त्वत्कटाक्षाद् ऋतेऽन्यत्
कान्तिश्रेणीजनितजनतानेत्रसौभाग्यपाकात्’ ॥

१६.‘‘जानामि त्वां विफलकरणे जल्पने च प्रसक्तां
कापेयानामनितरसमां संपदं किञ्च पूर्णाम् ।
तेनार्थित्वं त्वयि कु-तरुणी-ताडितः सन् गतोऽहं
याच्ञा मोघा वरमगुणिषु प्राप्तकामा न सत्सु॥

१७.‘‘वक्रैः कार्यैरवमतिजुषां टोपि! चूडाऽसि तस्मात्
संदेशं मे हर विलपतः क्रुद्धकन्याऽऽहतस्य ।
गन्तव्यं ते गृहमतिकटुस्वान्तवत्याः सदाऽपि
श्वानौ द्वारि श्रवणपरुषं बुक्कतो यत्र बद्धौ ॥

१८.‘‘श्रुत्वा मार्गं तव कथयतो मे चल त्वं विशुद्धं
पन्थास्ते स्यात् युवककपिभिर्वावदूकैरुपेतः ।
प्रायो येषु प्रभवति चलच्चित्रगानां नटानां
भूषावेषैरमितमहिमा नव्यरूपो विकारः ॥

१९.‘‘सख्युः कार्यं कलयितुमितष्टोपि! यान्त्यां भवन्त्यां
‘कञ्चिन्मुग्धं छलयितुमियं गच्छती’ति स्वदृष्टीः ।

१५.भवति विशये-सति संशये।
१८.युवककपिभिः-युवकाः कपय इव, तैः। वावदूकैः-वादशीलैः।

अग्रे कृत्वा स्तिमितनयना उन्नतभ्रूविकाराः
प्रेक्षिष्यन्ते सपदि भवतीं मानुषा राजकीयाः ॥

२०.‘‘त्वामीक्षित्वा सपदि मुदिता घोषणाक्रोशनाभ्यां
स्वीयोन्मादप्रकटनपरा उज्झितस्वस्वकार्याः ।
आक्रामेयुर्झटिति भवतीमाशु ते भुग्नभावाश्
चोरो दृष्ट्वा न मुदमयते पश्यतोहारकं किम् ? ॥

२१.‘‘-‘स्वस्ती’त्युक्त्वा त्वमपि ककुभां मण्डलं पूरयित्वा
दन्तान् सर्वान् मुखपिटकगान् तत्पुरो दर्शयित्वा ।
तेषां शीर्षे गलबिलततैः ‘सत्य’-‘नीत्या’दिशब्दैः
सर्वप्राणिश्रवणगरलं भाषणं वर्षयाशु ॥

२२.‘‘मस्तिष्कान्धान् लसदभिनयान् नाटके शोकनाम्नि
प्राज्ये राष्ट्रे करणविरतिप्रार्थनाधन्यजीवान् ।
वीक्षस्वाग्रे यमपुरगते मानुषे राजकीये
यस्मिन् कस्मिंश्चिदपि सहसा सांसदांस्त्यक्तकार्यान् ॥

२३.‘‘-‘आसन्निर्वाचनसमयगाष्टोपि! काश्चित् प्रतिज्ञास्
त्रायस्वास्मान् किल तदननुष्ठानरुड्भ्यः प्रजाभ्यः’ ।

२०.भुग्नभावाः-वक्रबुद्धयः। भुग्नं वक्रम्। पश्यतोहारकं- Robber।
२१.ककुभां-दिशाम्।
२२.करणविरतिः-शरीरविश्रान्तिः, कार्यकरणाभावः।
२३....रुड्भ्यः- ....रोषाभ्यः-रुट्क्रुधौ स्त्रियामित्यमरः।





एवं भीत्या विलपनपरान् राजकीयान् प्रपन्नान्
दृष्ट्वा धैर्यं जनय तव धीः खल्वसद्रक्षणोत्का ॥

२४.‘‘श्व-व्रातीयं कलहमथ धिङ् मल्लजातं नियुद्धं
युद्धं पूर्वं कुरुभुवि कृतं हा ! महाभारतीयम् ।
पर्यायेणाप्यनुविदधती सांसदी कार्यशैली
रीतिस्फूर्जत्कवनकरणे स्फूर्तिदात्री तव स्यात् ॥

२५.‘‘-‘यद्वा तद्वा नियमरहितं शासनं त्वं करोषि
क्लेशानस्मद्विधजनगतान् प्रच्छकः कोऽपि नास्ति’ ।
क्रोशन्नेवं विदधति यदि त्वय्यनल्पाश्मवर्षं
लोकः ; शीघ्रं ककुभमपरां प्राणनार्थं गृहाण ॥

२६.‘‘कश्चिज्ज्ञानन् स्वमतिविभवस्योपयोगप्रकारं
जानन्नित्थं कवयति नुवन् तन्मुदाऽऽकर्णय त्वम् ।
‘श्वेता सत्यप्यससि बहुधा वर्णवैविध्यपूर्णा
गर्वासूयामिलितकुहनाजातनानाविकारा ’ ॥

२४.श्वव्रातीयम्-शुनां समूहस्य सम्बन्धि। अनुविदधती-अनु-कुर्वती।
२५.लोकः-जनता। प्राणनार्थं-जीवनार्थम्।
२६. कश्चित् स्वार्थी स्वबुद्ध्या कार्यसाधनोपायं जानन्। नुवन्-स्तुवन्। णु स्तुतौ। अससि-शोभसे। अस शोभायाम्। श्वेताऽपि टोपी विविधमानसिकविकारहेतोर्वर्णानेकत्वं बिभर्तीति भावः।

२७.‘‘-‘औचित्यं नैत्ययि !कमलिनीकल्पना किं भवत्यां
यस्या भानुर्भवति वितरद्रूप्यकः क्षुद्रचेताः ।
आहोस्वित् त्वय्यथ कुमुदिनीधर्मदर्शी विपश्चित्
कोऽपि स्याद्यः प्रकटयति न द्रव्यदे किं शशित्वम्?’ ॥

२८.‘‘-‘सत्यप्यन्धा त्वमथ बधिरा हन्त, चक्षुष्मती त्वं
दिव्यश्रोत्राऽप्यसि मम कृते टोपि! भक्तस्य नन्तुः ।
श्रीवत्साङ्कोरसि कृतपदे ब्रह्मपत्नीशकान्ते
मत्कायां ते लसतु पतितो दक्षिणायां कटाक्षः’ ॥

२९.‘‘एतादृग्भिः श्रुतियुग-कल-स्तोत्रपाठप्रवीणैर्
गाढक्ष्वेडैः स्वहृदि वचनोद्धूतपीयूषसारैः ।
न प्लाव्येस्त्वं विहितनतिभिष्टोपि! लब्धावकाशैर्
कर्षिष्यद्भिस्तव पदयुगं पातयिष्यद्भिरग्रे ॥

३०.‘‘यद्याक्षेपाः श्रुतिपथगता मन्त्रिणां कार्यवैखर्य्-
आसम्बद्ध्ये स्मितवरमुखी यच्छ मिथ्योत्तराणि ।

२७.अयि टोपि!औचित्यं न एति किम् ? त्वं कमलिन्यथवा कुमुदिनी। तव कृते धनदाता सूर्योऽथवा चन्द्रः।
२८.श्रीवत्साङ्कस्य विष्णोरुरसि संपादितस्थाने!-लक्ष्मि!ब्रह्मपत्नि!-सरस्वति! ईशकान्ते-पार्वति!
२९.क्ष्वेडो विषम्।कलो मधुरः।पदयुगं कर्षिष्यद्भिः,पातयिष्यद्भिश्च।
३०.आसंबद्ध्ये-असंबद्धत्वे।





क्रुद्धा सत्यप्यनृतवचोजाग्रदुद्वेगलोकाद्
आत्मत्राणप्रणिहितमतिर्विस्मृतान्यावनेच्छा ॥

३१.‘‘कर्णद्वन्द्वे सकलमितरच्छृण्वती त्वं ‘पुराणं’
मा भूर्विघ्नप्रतिहतमतिर्मत्क्रियासत्क्रियामाम् ।
कार्ये मुख्ये कुतुकविरहो गाढनिष्ठा च गौणे
स्वक्षेमार्थं खलु सखि! खलै राजकीयैः क्रियेते ॥

३२.‘‘आहोस्वित् संविदपि भवतादावयोष्टोपि! काचित्
कार्यं मे त्वं जनयसि शुभं मत्प्रियागेहगन्त्री।
कुर्वे यत्नं तव जयकृते भाविनिर्वाचनेऽहं
मित्रे लाभं परमिह मिथो वाञ्छतः क्षुद्रबुद्धी ॥

३३.‘‘मा भैषीर्यत् प्रति जिगमिषुस्त्वं गृहं तन्निकृष्टां
मा मन्यस्व प्रचुरभयदां संसदं मन्त्रिपूर्णाम् ।
युद्धे त्वं चेज्जयसि न सखि ! ब्रूहि, निर्वाचनाख्ये
कस्याग्रे स्वं विरुचि वदनं दर्शयिष्यस्यविज्ञे ! ॥

३४.‘‘अग्रे त्यक्ताध्ययनसुरुचि स्वीकृतासभ्यरीति
क्षीणज्ञानार्जनफलगति च्छात्रवृन्दं यदि स्यात् ।
तज्ज्ञानीथाः समुचितपथे यान्तमात्मानमेवं

३१.मुख्यगौणयोर्गौणे कार्यसंप्रत्यय इति नवीनो राजकीयो न्यायः।३२. संवित्-परस्परेण व्यावहारिकोऽङ्गीकारः।संविदागूः प्रतिज्ञानमित्यमरः। द्वे शुद्धबुद्धी मित्रे मिथः परस्परेण।अर्थान्तरन्यासालङ्कारः
३३.निर्वाचनाख्ये युद्ध इत्यन्वयः।विरुचि-कान्तिरहितम्।

साधुर्मार्गो नृभिरनुसृतः सिद्धिशङ्कां विधत्ते ॥

३५.''यच्छैतर्हि श्रवणयुगलं विश्वविद्यालयीयं
वृत्तं ज्ञातुं कुतुकलहरीपूरितं भूरि यत्र ।
गम्भीरत्वं जहति लघुतां लान्ति वाक्यानि यूनां
प्रीते रीतौ किमपि समयाकुर्वतां व्यर्थमेव ॥

३६.''द्रष्टुं धूर्तान् गुरुतरगुरून् विश्वविद्यालयस्थान्
त्वत्के नेत्रे प्रयतनवशाट्टोपि ! दीर्घीक्रियेताम् ।
वैधेयानां कपटकृतिनां गालिदाने रतानां
येषां चित्तं प्रसितमनिशं कर्मसु क्षुल्लकेषु ॥

३७.''पश्यन्त्यास्ते किमिदमिति भीसंहितस्वान्तवृत्तेर्
जैजैकारो गमनमयितुं यत्नवाञ्च्छ्रूयमाणः ।
श्ब्दो विद्यानिलयचलितच्छात्रनिर्वाचनस्येत्य्
एवं बोधे धरतु पटुतां कर्णबाधिर्यधीरः ॥

३८.''त्वत्सख्यार्हान् भरतकुलजान् वीक्ष्य शिष्यान् गुरूंश्च
स्फोटं यायाद् हृदयकमलं प्राप्य ते भूरिहर्षम् ।

३५.एतर्हि-अधुना।
३६.वैधेयानां-मूर्खाणाम्।संशोधनविधौ- संशोधनरूपे प्रौढशिक्षणक्षेत्रप्राध्यापकानां वास्तविके कर्तव्ये।केवलं पाठप्रवचनादिषु संलग्ना विश्वविद्यानिलयेषु प्राध्याकत्वपदवीं नार्हन्ति।
३७.जैजै-'जय जय' इत्यस्य हिन्द्यादिप्रान्तभाषास्वपभ्रंशः।





तस्माद् रज्जून् बलवदुरसि स्थापयित्वा बधान
प्रागेवापद्धरणकरणं पद्धतिर्धीनिधीनाम् ॥

३९.''दृष्ट्वेर्ष्याल्वोरपतितधियो द्राग् विवाहाख्यगर्ते
तद्दम्पत्योरनितरसमं मौढ्यमुद्वीक्षमाणा ।
घोराक्रोशैर्भषकयुगलं स्मारयित्रोः शृणु त्वं
नित्यं वादान् कठिनवचनव्रातजातानल्पान् ॥

४०.''-'धर्मोऽस्माकं जनयति मिथः प्रेमभव्यं प्रपञ्चं
दिव्यो धर्मः परिणयकृतोर्हन्त यूनोर्विवाहः' ।
एवंभूतप्रवचनचणैश्छिन्नलाङ्गूलफेरु-
स्निग्धस्वान्तैस्त्वरितमतिसंधीयसे धूर्तवृद्धैः ॥

३९.विवाहाख्यगर्ते ये जना न पतितास्तान् दृष्ट्वा असूयायुक्तयोर्दम्पत्योः। भषकयुगलं-शुनोर्युगलम्।
४०.छिन्नं लाङ्गूलं यस्य स फेरुः-शृगालः। अत्रार्याः पुरातनमुदाहरन्तीममितिहासम्:''शृगालस्य कस्यचिल्लाङ्गूलं कथञ्चिच्छिन्नमासीत्। स चिन्तितवान्-'मम लाङ्गूलाभावं निमित्तीकृत्य सर्वैरितरैः शृगालैरहं विडम्ब्ये। तन्निवारणाय किमपि कर्तव्यम्'। स इतरानुवाच शृगालान्-'हे शृगालाः, लाङ्गूलं शृगालानां भारायते। पश्यत मां यस्य लाङ्गूलभारो नास्ति, तस्मादहं शीघ्रं चलितुं शक्नोमि। यूयमपि मद्वद्युष्मदीयानि पुच्छानि कर्तयत'। ततोऽन्यैः शृगालैर्बुद्धिलेशमपि अबिभ्राणैस्तदङ्गीकृतम्। तेषु स्वपुच्छानि कर्तयितुमुद्यतेषु युवा बुद्धिमान् कश्चिच्छृगालः पृष्टवान्-'यदि पुच्छानि न सन्ति, देहेऽस्माकं मक्षिकाजातायां कण्डूं

४१.‘‘-‘अद्य श्वो वा भवति कनकस्फूर्जदुद्योगलाभस्
तस्मात् पुत्रा उपयमयते’त्यज्ञगीःश्रद्धयाऽज्ञाः ।
हीनोद्योगाः कृतपरिणया अर्थलेशेन हीना
नूत्नाः पत्न्योऽभिनवपतयश्चानुकम्प्या भृशं ते ॥

४२.‘‘त्वत्कां कान्तिं विकसितमुखो मेलयन् दन्तपङ्क्तौ
द्रष्टव्योऽग्रे निजवदनतो धूनयन् वेदमन्त्रान्।
काले यूनोः परिणयविधेश्चित्तचातुर्यभास्वत्-
पौरोहित्यद्रविणविसरो धन्यजन्मा पुरोधाः ॥

४३.‘‘-‘तत्तत् क्रेयं धनवदभिधास्तोत्रपात्रत्वसिद्ध्यै
यद्यद् वस्तु स्फुरति बहुधा टी.वि.(T.V)विज्ञापिकासु ’।
एवं लोभातिशयविलयीभूतवित्तैः प्रमत्तैर्
जायेयातां हसितरुदिते द्रागुभे मानसे ते ॥

ता मक्षिका धावयितुं क इवाभ्युपायः?’।’’तद्वद्धूर्ता वृद्धाश्छिन्न-लाङ्गूलेन शृगालेन सादृश्यं वहमाना विनष्टविवेकाः सन्तो युवजनान् युवकान् युवतीश्च एवं दुर्बोधयन्तिः ‘विवेकः शिरोभाराय।तदपवारणेन विवाहं कुरुध्वं, शिरःशूलादपि मुक्ता भवत’। अतिसंधीयसे-वञ्च्यसे।

४२.पुरोधाः-पुरोहितः।विवाहेन लाभः केवलं पुरोहितस्येति वास्तविकं सत्यमत्र स्फोरितम्।सत्योक्तिः किल धर्माय कल्पते। एतेन संदेशकर्तुः पुण्यलाभः सूचितः।

४३.हसितरुदिते कर्तृ।मानसे अधिकरणम्।





४४.‘‘हीनज्ञानां प्रगतिपदवीपान्थतामादधानान्
आस्ये केशेष्वधरनखयोर्हस्तयोः पादयोश्च ।
पश्यन्नग्रे किमपि किमपि स्त्रीजनान् लिम्पतस्त्वं
गच्छेः शोकं द्युतिविरहितानुज्झितारोग्यभाग्यान् ॥

४५.‘‘अग्रे पश्येः कवनकलया जीविकाऽवाप्तिमिच्छोर्
लोकज्ञानाभ्यसनविरहातङ्कशङ्काकुलस्य ।
कोशैः प्राच्यैरपि च कवनैराददानस्य शब्दान्
संयोज्याहो किमपि वयतो दुष्कवेः साहसानि ॥

४६.‘‘पक्षिप्रेक्षाकुतुकहृदयाः केऽपि विद्यावरिष्ठाः
पश्यन्तस्त्वां ‘नभसि डयते शोभना श्वेतकाकी’ ।
एवं ब्रूयुः, प्रमुदितमनोवृत्तयः संलपन्तो
द्योतग्राहैर्द्युतियुतकृतीः किञ्च गृह्णीयुराशु ॥

४७.‘‘अन्तःशून्यां बहिरतितमां श्वेतिमानं दधानां
षष्ठीचन्द्राकृतिसमतनुं त्वां विधायाम्बकेषु ।
नृत्यान्यङ्गैर्विदधति समैरेजमाना द्रुतं ते
क्षिप्तस्वान्तप्रकटनपटुब्रह्मसृष्टिप्रधानम् ॥

४४.द्युति-विरहितान्-कान्त्या रहितान्।

४६.द्योतग्राहैःCamaras।द्युतियुतकृतीः- Photographs

४७.अम्बकेषु-नेत्रेषु।समैः-सर्वैः।एजमानाः-कम्पमानाः।ते जनाः।

४८.‘‘आमोदस्तेऽध्वनि बहुविधोऽन्यायतः पान्थमार्गे-
षूद्यानेष्वप्यविधि  नगरे निर्मितैरापणैर्द्राक् ।
एतद्वीक्ष्याप्यजगणसमैः सज्जनैः क्षोभहीनैः
कुर्च्या चिन्तां जहिहि मुदिता वञ्चनाभिः स्थिरायाम्॥

४९.‘‘पद्येन त्वद्विषयकनुतिश्रेणिगण्येन पुण्यं
वाञ्छन्त्येके विदधति च  धीलड्डुकप्राशनाशाम् ।
कैश्चिद् दत्त्वा किमपि किमपि प्रार्थ्यसे वीतशङ्कं
गूढस्वार्थैर्विहितविनयैः कामनां व्यञ्जयद्भिः  ॥

५०.‘‘मध्येपद्यं प्रकृतिगमनक्लेशकारैः फलाद्यं
विक्रीणद्भिः प्रतनफलके हस्तनुन्ने सचक्रे ।
तद्रोधाय प्रयतनपरे रक्षिणि प्रात्तलञ्चैः
स्नेहं गच्छेर्मतिगतजया भाविनिर्वाचनेषु ॥

क्षिप्तस्य स्वान्तस्य प्रकटने पटुर्यो ब्रह्मा तस्य  सृष्टौ प्रधानम्।नृत्यस्य विशेषण-मेतत्।
४८.अक्रमिकानपि दृष्ट्वाऽऽपणान् क्षोभहीनैः।सज्जनंमन्यमानानाम् एतादृशामेव जाड्याद् भ्रष्टा निर्वाचनेषु जयशीला भवन्ति।
४९.धीलड्डुकं-मनोमोदकम्।त्वयि किमपि धनादिकं दीयते। धनादिकं दत्तवद्भिः प्रार्थ्यसे च त्वं विधिविरुद्धान् वरान्।
५०.मध्येपद्यं-पद्यायाः-मार्गस्य मध्ये।प्रकृतिगमनक्लेशम्-जनताया गतागतयोः क्लेशमुत्पादयद्भिः।फलाद्यं-फलादिकम्। हस्ताभ्यां नुन्ने प्रेरिते।नुद प्रेरणे।प्रात्तलञ्चैः-प्रदत्तोत्कोचैः।





५१.‘‘सृत्याः पार्श्वौ हरितदलयुङ्नेत्ररम्यद्रुमाली-
छायाशीतौ ‘निशितपरशुक्रीडनार्था स्थली’ति।
भावं भूयो मनसि दधतीं पालिकां नागरीमप्य्
अग्रे पश्य द्रुम-समुदय-त्राणने भाषणोत्काम् ॥

५२.‘‘व्याजान्वेषी सुनिपुणमदन् सर्वकारीयवित्तं
मेयर्(Mayor)नामा बहुलमयते यो विमाने विदेशान्।
ऊर्ध्वग्रीवा नयनपदवीं तं प्रहृष्टा नय त्वं
मृत्वा स्वर्गं तव जिगमिषा पुण्यसंपत्तितश्चेत् ॥

५३.‘‘अन्धान् एडानपि रचयतां वाहनैर्धूमभूम्ना
पौरानुच्चध्वनिभिरभितोऽनल्पसंमर्दितानाम् ।
भीतिक्षोभे सपदि सृजतां कच्चरैर्दूषितानां
मोदस्व त्वं  पुरि सखि ! पथां वीक्षमाणा विकारान् ॥

५१.सृत्याः-मार्गस्य।दलम्-पर्णम्।स्थली-स्थलम्।भावं-अभिप्रायम्।पालिकां नागरीं-नगरपालिकाम्।त्राणने-रक्षणविषये। विषयसप्तमी।भाषणोत्काम्-भाषणोत्कटाम्।
५२.मेयर्पदवीधारिणः पौनःपुन्येन सर्वकारीयं धनं भक्षयन्तो व्याजविशेषान् निमित्तीकृत्य विदेशान् प्रयान्तीति प्रसिद्धम्।
५३. कीदृशां पथाम्?  पौरेषु अन्धत्वमेडत्वं चोत्पादयितॄणां, सम्मर्दयुक्तानाम्।भीतिक्षोभयुक्तानां कल्मषयुक्तानां च ।पुरि-नगरे। पथां-मार्गाणां विकारान् वीक्षमाणा।

५४.‘‘रज्यन्मौढ्ये! न किमिति चलस्यादराज्जन्मनाऽन्धा
कायस्थानां नयसि न हला! याऽक्षिमार्गे कुकृत्यम् ।
टोपि ! स्वासम्मतजनकृतं प्रार्थनापत्रराशिं
कुर्वाणानामधिकृत-नृ-दृक्पात-विन्यास-दूरम् ॥

५५.‘‘आधिक्येन स्फुटति जनता, भूरिसंख्यानि यानान्य्,
अध्वानः संकुचितरचनाः-सर्वमेतद् विलोक्य ।
नेत्रद्वन्द्वे सखि ! दृढतरं टोपि ! वस्त्रं बधान
व्यङ्गान् पङ्गूनपि बत कुणीन् द्रष्टुमिच्छा न चेत्ते ॥

५६.‘‘हंहो ! लब्धाकृतिरतितमां वञ्चनाशृङ्खलेयं
मूर्तीभूता किमुत कुहना मस्तकं शाकुनं वा ।
एवम्भूता सपदि विशयाः सञ्जनिष्यन्त एव
त्वद्द्रष्टॄणां मनसि गहना ये समाधानहीनाः ॥

५७.‘‘एतावन्तं समयमुपलप्रायमार्गे चरित्वा
घोरक्ष्वेडानिलमयपुरप्रान्तभागे डयित्वा ।
श्रान्तं ते विश्रमय करणं टोपि ! शाखोटकोर्ध्वं
वृक्षोन्मीलद्विशदकमलश्रीभ्रमोत्पादयित्री ॥

५४.हला-सख्याः संबोधनमिदम्।हण्डे हञ्जे हलाऽऽह्वाने नीचां
चेटीं सखीं प्रति इत्यमरः।
५७.शाखोटकः-भूतावासो वृक्षः।





५८.‘‘-‘आस्माकीना सितपटसुता स्पन्दते जीवनाडी’
संचिन्त्यैवं विहितविरतौ त्वय्यगाग्रे मिलत्सु ।
पीयूषार्द्रा तव सचिवताकाङ्क्षिषु, क्ष्वेडधारा-
मित्रा दृक् ते पततु पदवीत्यागपत्रेच्छुकेषु ॥

५९.‘‘कार् (Car)यानेन द्रुततरगतिर्दर्शनीयोऽथ रागी
संपत्पुञ्जप्रचितविभवो राजकीयेऽपि विज्ञः ।
संन्यासी यद्वसनविगलत्कान्तितस्तेऽपि किञ्चित्
काषायत्वं भवति वपुषि स्वान्तवैचित्र्यकारि ॥

६०.‘‘एतावत्या वचनभवया प्रेरणानां सरण्या
धाविष्यन्ती झटिति कशया शालिहोत्रीव विद्धा ।
उत्कर्णा त्वं शृणु वरगते, टोपि ! कौतूहलाढ्या
प्रेयस्या मे सदनमधुना वर्णयन्तीर्ममोक्तीः’’ ॥

५८.सितपटस्य श्वेतवस्त्रस्य सुता तन्निर्मितेति यावत्। विहित-
विरतौ-कृतविश्रान्तौ।त्वयि+अगाग्रे।अगाग्रे-वृक्षस्याग्रे।विहित-विरतौ
त्वयि सत्याम्। सत्सप्तमी। क्ष्वेडः-विषम्।तव मन्त्रित्वकाङ्क्षिषु अमृता
स्यात्ते दृष्टिः।तव त्यागपत्रप्रदाना-काङ्क्षिषु च विषमुक् स्यात्।
५९.संपत्पुञ्जेन धनराशिना प्रचितो-वृद्धिं गतो विभवो यस्य। तस्य
काषायत्वकारणात् तवापि काषायत्वम्।तद्गुणः।
६०.उत्कर्णा-ऊर्ध्वकर्णा सती।शालिहोत्री-अश्वा।

# मोघदूतम्

## उत्तरमोघः

१.‘‘पश्चात्तापं न वहति कृतेऽप्यागसि श्रीमदाद् या
यस्याः कर्णाध्वनि मम गिरामध्वनीनत्वमिष्टम् ।
तस्या गेहान्नयनपथगाट्टोपि ! रोमाञ्चिता स्या
व्योमव्यापिश्वयुगभषणश्रोत्रभङ्गातिघोरात् ॥

२.‘‘तूर्णं त्वं मा प्रविश सदनं हर्षतो ज्ञानहीना
पश्येतां चेज्झटिति भलुहौ, त्वद्भविष्यं न वेद्मि ।
प्रागेवैतद् विशदितमतो दुष्ठु जाते ततोऽग्रे
क्षेपेषूणां तव न भविता लक्ष्यता मय्यमन्दम्॥

३.‘‘श्वानौ तौ स्तां तरणिज-पुरी-गृह्यकौ क्रूरदंष्ट्रौ
त्वं चाप्येधि प्रियसखि ! महावञ्चनाम्भोधिनक्रा ।

१.आगसि-अपराधे।आगोऽपराधो मन्तुश्चेत्यमरः। श्रीमदात्-संपत्तिजाताद् गर्वात्।
२.भलुहौ-श्वानौ।क्षेपेषूणां-निन्दारूपबाणानाम्।मयि+अमन्दम्-द्रुतम्।
३.स्ताम्-अस्तेर्लोटि प्रथमद्विवचनम्।तरणिः सूर्यस्तज्ञस्तत्सुतो यमः।एधि अस्तेर्लोटि मध्यमैकवचनम्।गृह्यकौ-गृहपालितौ।





कम्पं ते हृद्यनुचितमहं भावये वस्तुतस्तु
त्वत्प्रेष्ठौ तौ खलसुजनयोर्भेदनिर्धूननेन ॥

४.‘‘विश्वासाय प्रभवति महाकूटकार्ये तदेव
प्रायः श्वाग्रे नतिविरचनास्वान्तलीलाविनोदे ।
मिथ्यानीतिं यदिह भवती नाटकार्थं बिभर्ति
प्रत्यादिष्टाखिलवरगुणा गाढमाक्रान्तपीठा ॥

५.‘‘सेत्स्यत्कार्या विहितविनया प्रारभस्व स्तुतीनां
श्रेणीं यावद्भषणविरतिं न श्रयेते किलामू ।
त्वद्बोधाय त्रिचतुरनुतीः श्रावये ; दर्शितायाम्
अङ्गुल्यां त्वं गिलसि हि करं लोकसम्मोहनीतौ ॥

६.‘‘-‘पूर्वं वाणी त्रिदशसमितौ वल्लकीमस्पृशन्ती
हेतुं पृष्टा ‘हृदय-वरमुत्-कारिणि श्वप्रलापे।
कस्य श्रोत्रे सृजतु निनदैः शर्म वीणे’त्यवादीद्
वन्दे तादृङ्हिम-निबिड-ध्वान-कृद्भ्यां युवाभ्याम्’ ॥

अनुरूपो यौष्माकीणः संसर्गः क्रौर्यवञ्चनापूर्ण इति भावः। निर्धूननम्-नाशः। प्रेष्ठौ-प्रीत्याः पात्रम्।
४.तदेव-खलसुजनयोर्भेदस्य नाशनं यदुक्ते पूर्वतने पद्ये, तदेव। श्व+अग्रे विनतिः।प्रत्यादिष्टाः तिरस्कृताः अखिला वरगुणा यया। पीठमत्र राजकीयम्।
६.त्रिदशानां-देवानां समितौ-सभायाम्।वरमुत्-श्रेष्ठा प्रीतिः।ध्वानः-शब्दः।

७.“-‘बद्धस्पर्धो  मृदुतररवे कोकिलोऽयं युवाभ्यां
हन्त प्राप्तुं जयमसफलः  संकुचन् मानसेन।
जातोद्वेगः कृतबहुविधह्रीक उत्पन्नशोकः
शाखापत्रस्थपुटितखले क्लृप्तवान् स्वीयवासम्’॥

८.“-‘रूक्षं ध्वानं जलधिसरणिर्वा समाकर्ण्य हर्षाच्
छिष्या भूत्वा सपदि सफला या यशो लाति गुर्वोः।
प्राप्येदानीमतिभयभरस्फूर्जथुत्वं हि सैव
श्रुत्योरध्वन्यविरलमलं पूरयत्यश्मवर्षम्’॥

९.“-‘शुण्डाया अप्यमरकरिणः पुच्छयोर्वा वरत्वे
सुज्ञाते सत्यपि जलपशुं वाहनीकृत्य कश्चित्।
प्रायः पश्चात्तपनजशुचा स्वर्गगेहाधिपेन
क्लिन्नाक्षेण क्षितितलपतद्दृष्टिमूर्त्याऽश्रु सृष्टम्’॥

७.स्थपुटित-निम्नोन्नत।खले-स्थले।(खलेकपोतन्यायः स्मर्यताम्)
८.रूक्षं-परुषम्।कोमलत्वधर्मप्रतियोगि।लाति-आदत्ते।ला आ दाने।
गुर्वोः-आचार्ययोर्युवयोः शुनोः।‘प्रियशिष्या ललिते कलाविधौ’ इत्यादि-
प्रयोगदर्शनेन शिष्येत्येव साधुः प्रयोग इति प्रतिभाति।अस्मिन्नर्थे
छात्रा इति प्रयोगस्तु नवीनः। अश्मवर्ष-लक्षणया कर्णभेदकं ध्वनिम्।
९.अमरकरिणः-ऐरावतस्य।शुण्डाया अपेक्षयाऽपि युवयोरेव पुच्छं
श्रेष्ठम्। एतत् सुविज्ञातम्।तथापि जले जातं पशुविशेषमेव वाहनत्वेन
इन्द्रो यत्स्वीकृतवान्,तदनु पश्चात्तापवता तेन रुदताऽश्रु वृष्ट्याकारेण
सृष्टम्।





१०.“-‘सत्यब्जह्रीपटुनि युवयोरक्षिणीड्यौ ! स्फुरन्त्यां
दन्तश्रेण्यामपि बहुमिलद्दाडिमीबीजपङ्क्तौ।
नासायां चम्पकविलयनप्रेमवत्यां च सत्यां
बर्ही कश्चिज्जडमतिभिरन्विष्यतेऽन्वेष्यशोभैः’॥

११.“-‘शैलीं वामाक्रमणसमयभ्राजितामेकवारं
वीक्ष्यात्यन्तं शिशिरबहुले हीनपानीयलेशे।
अप्राप्यान्ने हिमनिबिडताजीविकाभूरिकष्टे
कैलासे द्रागभजत हरिः पार्वतीवाहनत्वम्’॥

१२.“-‘मेघानां खे जयति चलनं यौवयो विक्रमोऽयं
कामासूयाजनिपटुतरा यौवयी रूपसंपत्।
हृद्ये गाने पिकजयवरं यौवयं भुक्क्णं च
क्षीणा गीर्मे मितपदजुषो भूतयोर्वर्णने वाम्’॥

१०.अब्जस्य कमलस्यापि ह्रियः-लज्जाया उत्पादने पटुनि
अक्षिणि-चक्षुषि-नेत्रे।जात्येकवचनम्।कमलस्य लज्जामुत्पाद-
यत्सु सत्सु।बर्ही-मयूरः।यद्यपि पक्षिणां दन्ता न सन्त्येव।परन्तु
सौन्दर्यसूचकानि यान्यवयवानि प्रसिद्धानि तैः समुपेतयोः सतोरपि
युवयोरन्यः कोऽपि मयूराख्यः पक्षिविशेषो जडैरन्विष्यत इति
भावः।
११.वाम्-युवयोः।आक्रमण...।हरिः-सिंहः।
१२.भूतयोः-जीविनोः।युवयोर्भावः-यौवयम्।तस्य  लिङ्गत्रये
प्रयोगोऽत्र।

१३.“-‘बन्धू! श्वानौ! पशु-समज-सद्रत्नभूतौ! नरेड्यौ !
साष्टाङ्गेयं प्रणतिरधुना नम्रभावा पुरो वाम्।
पादौ मर्द्यौ स्वकृतिसमये गार्दभौ मत्कराभ्यां
नम्रं नत्यां किमुत धनिकप्रीतिकृद्भ्यां पशुभ्याम् ?’ ॥

१४.“-‘धूर्तस्वामी कृपणगणराट् कोऽप्यदत्त्वा धनं मे
स्वान्ते नूनं प्रहसति मया कारयन् दूत्यकार्यम् ।
तस्माद् द्रष्टुं लषति तनुजां स्वामिनो यौवयस्य
स्वान्तं मे किञ्चिदपि लभतामित्थमाशां दधानम्’ ॥

१५.“-‘दन्तैर्मा मा सपदि दशतं पण्डितौ ! मांसलोभाद्
वस्त्रैर्जातां चतुरहृदयौ ! यच्छतं मार्गमन्तः ।
श्वेतां शोभां धरतु सदनं श्वेतया शोभया मे
पीठार्थित्वं भवतु युवयोर्भाविनिर्वाचनेषु’ ॥

१३.नराणाम् ईड्यौ-स्तुत्यौ।नम्रं यथा स्यात्तथा।सांप्रतिकानां धनिकानां प्रीतिकारिणः प्रायः श्वानः।पशुभ्यां-अत्र चतुर्थी।

१४.दूत्यं-दूतत्वं।दूतशब्दाद् ‘दूतस्य भागकर्मणी’ (४.४.१२०) इति यत्प्रत्ययः।“दूत्याय दैत्यारिपतेः प्रवृत्त” (नैषधीयचरिते ६.१)इत्यादयः कविप्रयोगाः।दौत्यमित्यत्र तु ब्राह्मणादेराकृतिगणत्वाद् दूतस्य ब्राह्मणादित्वं ततः ‘गुणवचनब्राह्मणादिभ्यः कर्मणि च’ (५.१.१२४) इति ष्यञिति रसास्वादिन्याख्यायां वेदान्तदेशिकप्रणीतहंससन्देशस्य व्याख्यायां (पु.७)श्रीकृष्णब्रह्मतन्त्रस्वामी।तस्मात् कुन्तलेश्वरदौत्यमिति साधु। कृते च दूत्यकार्ये ममापि किञ्चिद्धनादिकं लभ्यते।

१५.पीठार्थित्वं-Candidature अन्तः प्रवेष्टुं मार्गं मे यच्छथ-





१६.“-‘एवंरूपं नटनपटुतां दर्शयित्वा वशं ताव्
आनीयाशु प्रकटय निजां बुद्धिमत्ताममोघाम् ।
नीतिं कोऽपि श्रवसि न हरिश्चन्द्रदत्तां विधत्ते
लोकः सर्वोऽप्यभिनयवतां मुह्यते पाटवेन’ ॥

१७.“वाक्यैरेतैरुदितहृदयामोदभूम्ना सखायौ
त्वत्कौ पद्यां झटिति जहितस्त्वत्कृते तौ दयालू ।
सद्मान्तर्द्राक् प्रविश-सुदृढं मानुषीयं न चित्तं
स्वान्तं काले किमु कलिगते हन्त! कौलेयकीयम् ॥

१८.“गेहस्यान्तर्लघुशशनिभे! पादविन्यासतः प्राक्
सम्यग् गच्छेः पथि विलसितैर्वृक्षकैश्च क्षुपैश्च ।
प्रत्यग्राणां भरतज-नृणां दम्भभूमा स्थितो यैर्
अस्मद्देशप्रथितलपितश्रेण्यलब्धाभिधानैः ॥

श्चेद्भाविनिर्वाचनेषु युवयोः पीठार्थित्वं यथा भवेत्तथाऽहं करोमि।

१७.पद्यां-मार्गम्।जहितः-त्यजतः।भविष्यद्वृत्त्या वर्तमाने प्रयोग ओदनं पचतीतिवत्।मनुष्याणामेव चित्तं न दृढं,किमुत कलिकाले कौलेयकीयं-शुनां संबन्धि ?

१८.लघुशशनिभे इति टोपीसंबोधनम्।शशास्तु यद्वा तद्वा झम्पादि रचयेयुः, उद्यानस्य नाशमपि कदाचित् कुर्युः।तन्मा भूदिति। अत्र गूढाकूतगर्भस्य विशेषणस्य सत्त्वात् परिकरालङ्कारः। क्षुपैः-ह्रस्वैः वृक्षकैः।प्रत्याग्राणाम् आधुनिकानां भारतीयानां दम्भभूमा गर्वाधिक्यम्। अस्मद्राष्ट्रे प्रथिता या भाषास्तासां श्रेणिषु अलब्धनामभिः अप्राप्तसंज्ञाकैः।

१९.''अग्रे भव्यं नयनयुगलीपर्वकृद् राजसौधं
वीक्ष्याश्चर्यं तव भवतु मा शस्तवस्तुव्रजाढ्यम् ।
उद्योगेऽनुन्नतपदवता तादृशी सिद्धिरात्ता
गूढं ज्ञात्री त्वमिह न किमत्यूर्ध्वधी राजकीये ? ॥

२०.''यस्याः कस्या अपि किल पुरा धिक्, पिशाच्याः पुरस्तान्
नत्यैवाद्य प्रचुरधनकृत् पीठमारूढवत्याः।
'प्रत्यूहोऽन्यः स्थित' इति न किं द्वारपालेऽथ दृष्टे
चिन्तोत्थास्यत्युरुतरपथस्तत्र किं ते न भाति ? ॥

२१.''आहोस्विच्चेत् तमभिलषसि प्रीतिमन्तं त्वयि द्राक्
'तस्योष्णीषं' वद 'वरतरं दैवराज्यात् किरीटात्' ।
'नीरूपं' तं सखि ! कथय वा 'मन्मथप्राणनाशं'
टोप्येतादृग्विषयविसरेष्वस्ति ते देशिकात्वम् ॥

२२.''पर्याप्तिर्न स्फुरति यदि ते तस्य चाप्येतयोक्त्या
मित्र! ब्राह्मीमभिनयझरीं तच्छ्रुतौ पूरयैवम् ।
'आर्य ! त्वद्दृष्ट्यनुपदमियं स्नेहधारा हृदुत्था

१९.राजकीये अति+ऊर्ध्वधीः सती त्वं गूढमिह किं न ज्ञात्री-ज्ञातवती? तादृशी सिद्धिः-राजसौधनिर्माणशक्तिरूपार्हता।
२०.प्रत्यूहः-विघ्नः।द्वारपाले दृष्टे 'विघ्नोऽन्य उपस्थित' इति चिन्ता नोत्थास्यति किम्? तत्र श्रेष्ठ उपायः किं न भाति ते ?
२१.विसरेषु-समूहेषु।





शुद्धं साक्ष्यं प्रकटयति नौ पूर्वजन्मानुबन्धे' ॥

२३.''-'पूर्वस्यां दिश्युदयमयते द्वादशात्माऽऽधुना यद्
वर्षत्यब्दो यदपि पृथिवीं सस्यवस्त्रां चिकीर्षन् ।
एतल्लोकप्रियघटनयोः कारणत्वं भजन्ते
सौम्य ! त्वत्का हृदयसुभगा वृत्तयो लोकभव्याः' ॥

२४.''-'कश्चिद् बुद्धिप्रसरसहितम्मन्यमानो विशुद्धे
त्वत्के कर्मण्यमलचरिते प्रेक्षतां दोषलेशम् ।
एतत् कृत्वा प्रचुरमतिमान् कृष्णरन्ध्रेषु दृष्टिं
स्वीयां बध्वात्वथ स दिनकृन्मण्डल-श्री-स्थितेषु' ॥

२५.''-'मा सूर्यः स्वं रजनिजनितं यात्ववीक्ष्यत्वमभ्रे
मापीन्दुः स्वं दिनसमयजं दृश्यताऽभावमेतु ।
द्वावप्येतावथ सदृशतामार्य ! यातां त्वयाऽङ्ग !
श्राम्यत्येकः स्वगृहमवितुं भूरि नक्तन्दिवं यः।' ॥

२३.द्वादशात्मा-सूर्यः।अब्दः-मेघः।
२४.बुद्धिप्रसरसहितम्मन्यमानः पण्डितंमन्य इति यावत्। यदि त्वयि दोषलेशोऽस्ति, सूर्येऽपि कृष्णरन्ध्राणि सन्ति।यथा सूर्ये कृष्णरन्ध्राणि न सन्ति, तथा त्वय्यपि दोषलेशो नास्तीति भावः। निदर्शनासखो मिथ्याध्यवसित्यलङ्कारोऽयम्।अयमलङ्कारो न सिद्ध्यतीति यदुक्तं पण्डितराजेन रसगङ्गाधरे, तन्नातीव श्रद्धेयम्।
२५.अवीक्ष्यत्वम् अदृश्यत्वं मा यातु।यातां-लोट् प्र.द्वि.व.

२६.‘‘-‘ऐन्द्रं वज्रं पतितमिह किं स्वर्गतो ? हेतवोऽमीः
१.शापाद् भ्रंशश्चिरसमयतः २.शक्रसेवोत्थजाड्यम् ।
३. भूम्यालोके परमकुतुकं ; हेतुषु त्रिष्वमीषु
प्राग्र्यं कस्येत्यतिविशययुग् - वीक्ष्य दण्डं जनस्ते’ ॥

२७.‘‘-‘राष्ट्राध्यक्षीभवितुमवितुं भारतं क्षेमहीनं
योग्यत्वे सत्यपि बत भवान् द्वारपालो यदस्ति ।
तन्नः स्पष्टीगमयति कलेर्दुष्टजुष्टं प्रभावं
काकश्चूते रटतु विरवे कोकिले दीनदीने ’ ॥

२८.‘‘-‘अन्याय्येऽध्वन्यनुदिनगतिर्भाति सिंहासनस्थः
पान्थो न्याय्ये पथि तु वरधीर्द्वारपालत्वमेति ।
एतद् दृष्ट्वा मम हृदि तथा जायते तीव्र ऊष्मा
सर्वोऽम्भोधिः प्रियसख ! यथा शुष्यति क्ष्मातलीयः’ ॥

एकः-एकाकी।भूरि-अधिकम्।सूर्यो नक्तमपि चन्द्रश्च दिवापि गगने स्वकर्तव्यं भूमिप्रकाशनरूपं कुरुतां,तदनन्तरमेव, गृहरक्षणरूपं कर्तव्यभारं नक्तमपि दिवापि निर्वहता त्वया सदृशौ भवताम्।
२६.प्राग्र्यं -प्राशस्त्यम्।तव करे दण्डं वीक्ष्य त्रयः संशया उत्पद्यन्ते जनानां मनसि। अतिविशययुक्-अत्यन्तं संशयालुः।
२७.दुष्टैः जुष्टं-सेवितम्।अनार्यजुष्टमित्यादि भगवद्गीतावाक्यं स्मर्यताम्।विरवे-रवरहिते मौनवतीति यावत्।
२८.सिंहासनमत्र लक्षणयाऽधिकारः।अन्याय्ये मार्गे गन्ता उन्नताधिकारी भवति, न्याय्ये तु मार्गे गन्ता द्वारपालकः।





२९.‘‘-‘विद्याशून्यैर्बहुकलुषिते शिक्षणक्षेत्रपीठे
कोषे देशद्रविणनिबिडे केनचिद् भक्ष्यमाणे ।
विद्वन्स्त्वादृग्वरजनकृते स्थानमेकं दुरापं
मित्र ! स्यात्किंमयि तव हितप्रापयित्र्यां भवन्त्याम्’ ॥

३०.‘‘-‘पुत्रीं द्रष्टुं कथयति गृहस्वामिनः कोऽपि विद्या-
क्षेत्रे जातो य उपमिनुते क्षेत्रियं सस्यमेव ।
तस्माद्दूरात् पदविरहिताऽभ्यागताऽहं कदाचिन्
मूर्खेण ज्ञो भवति हतधीर्नाशयन् स्वीयकार्यम्’ ॥

३१.‘‘-‘सद्मान्तस्त्वं त्वरय(१)वद मा तां गतां क्वापि कार्यान्
(२)नेदं राजव्यवहृतिगृहे राजकीयं कुकर्म ।
(३)उत्कृष्टे सा जयति न पदे (४) वेतनस्य ग्रहीता
त्वं ना‘प्यन्तर्न हि भवति सा’ वक्तुमेवं नियुक्तः॥

२९.येन केनापि किमपि किमपि भाग्यं संपाद्यते। एवं सति किं तव कृतेऽधिकारस्थानं प्रापयितुं न शक्यते त्वद्धितकारिण्या मया ?
३०.‘क्षेत्रियच्परक्षेत्रे चिकित्स्य’ इति शास्त्रम्।असत्यपि पोषणे, क्षेत्रे समुत्पद्यमानं, सस्याहारस्य स्वयं भक्षणेन व्रीह्यादिवर्धने क्लेशप्रदं सस्यं यत्तदेव क्षेत्रियंसस्य(Weed)मिति सर्वगन्धासंपादको दि.डा.वीरभद्रमिश्र आह स्म।इदं शस्तं प्रतिभाति।
३१. उत्कृष्टे पदे-अधिकृते पीठ इति यावत्।जयति-विराजते। कार्यान्-कार्यात्।अनुनासिकसन्धिः।चतुर्थे कारण इदं वक्तव्यम्-सदाऽपि‘कार्यालये नास्ति मुख्योऽधिकारी’ इति आगन्तून् जनान्

३२.''एवंरूपां वचनलहरीं निःसृतां त्वन्मुखाब्जाद्
आकर्ण्याम्भोनिधिगतसुधाधारया बद्धमैत्रीम् ।
हृष्टो गेहं  विशति स मनाक्स्पृष्टवैधेयभावो
तामाह्वातुं युवतिमधुना प्रस्तुतं वस्तु यस्याः ॥

३३.''शीघ्रं नेत्रद्वयपथगता काचिदालोकमेष्यत्
१.अज्ञव्रातप्रथितकथनप्राप्तरूपा पिशाची ।
२.कम्प्रस्यासावथ विटपिनो स्थूलतावान् प्रकाण्डः
कोटी एते जहिहि, सखि! तां निश्चिनुह्यूर्वशीं मे ॥

३४.''टोपि! श्वेता त्वमिति भुवने सुप्रसिद्धैव वार्ता
कान्तिस्त्वत्का किमिति सहसा रक्तरक्ता बभूव ? ।
जानीह्यस्या अधरयुगलीलिप्त-लिप्स्टिक्-प्रभायाः
पातान्नष्टस्तव सुरगजस्मारको हन्त! वर्णः ॥

३५.''पूर्वं स्तोत्रैर्जगदिथ 'शुनीं' 'सूकरीं' 'वानरीं' वा
कार्यस्यार्थे 'रतिहृदि महाक्षोभसंपादयित्रीम्' ।
तादृश्यास्ते न हि गुरुतरं स्तोत्रमस्या जडाया
मृद्भक्षित्वं कियदिव शिलाकण्टकाद्यद्मरस्य ? ॥

---

वक्तुमेव केचिद् द्वारपालाः वेतनं गृह्णन्तीति प्रसिद्धम्।
३२.अम्भोनिधौ लवणिमा वर्तते न पुनः सुधेति स्मर्यतामत्र।
३३.अज्ञानामेव व्रातेषु समूहेषु प्राप्तरूपा, न वस्तुसती।कम्प्रस्य कम्पनशीलस्य।जङ्गमस्येति यावत्।असौ।विटपिनो वृक्षस्य प्रकाण्डः मूलाच्छाखापर्यन्तो भागः।कोटी विकल्पद्वयम्।कोटी एते-प्रकृतिभावः।
३४.लिप्स्टिक्- Lipstick
३५.तादृश्याः-इत्थंभूतलक्षणायाः।अद्मरस्य-अतिभक्षणशीलस्य।





३६.''आदौ हस्तावभिनययुजा मुद्रया दर्शयित्वा
त्वद्दन्तश्रीपतनजनितं श्वेतिमानं दधानैः ।
केशैर्वृद्धाभ्रमपटुतरां दाम्भिकश्रेष्ठनामं
नत्वा कार्यं मम सखि! चिराद् वाञ्छितं प्रारभस्व ॥

३७.''टोपि! द्रष्टुं बहुबलयुतान् प्रस्तरे नावनीत्यं
चामुण्डीमप्यतिशयतया सुप्रसन्नीविधातॄन् ।
वर्णान् सम्यग् वद जडमतिश्रोत्रकुल्यामृतोत्सान्
कालेज्विद्यानिबिडहृदयामोदजन्मानुकूलान् ॥

३८.''-'हे ! स्वर्गौकःकुसुमरुचिरोद्यानखेलानिमग्न-
स्त्रीसंघातप्रसृमरमहातीक्ष्णमात्सर्यभूमे ! ।
सौन्दर्याभ्रस्थितलसद्दिव्यतारे मनोज्ञे !
लावण्याभोनिधिगतमणिश्रीप्रशस्ते ! नमस्ते' ॥

---

३६.वृद्धेति दृष्टॄणां भ्रमजनने पटुतरां नत्वेत्यन्वयः।दाम्भिकानां श्रेष्ठो यथा नमति तथा-उपमाने कर्मणि च (३.४.४५) इति णमुल्।
३७.प्रस्तरे-लक्षणया कठिने हृदये।नावनीत्यं-नवनीतत्वम्। लक्षणया मृदुत्वम्।बलिष्ठान् वशयितुं मृदुला वर्णा उच्चार्यन्ते। तथा कालेज्विद्यार्थिनीमिमां प्रसादयितुं मृदु यथा स्यात्तथा संभाषस्वेत्यर्थः।
३८.स्वर्गौकसो ये देवास्तेषां कुसुमसुन्दरोद्याने खेलन्तीनां स्त्रीणां वृन्देऽसूयां जनयित्रि!

३९.“-‘आयाता त्वामसति च वरे पादनेत्रे चलन्ती
नेत्रद्वन्द्वप्रतिहतसुमद्वन्द्वशोभां दिदृक्षुः ।
सौन्दर्यं ते, गुणसमुदयं, प्रोन्नतां किञ्च विद्यां
सम्यक् स्तोतुं लषितमिह मां प्रापयद् दूरदेशात्’ ॥

४०.“-‘प्रातःकाले विकसितवतः पुण्डरीकस्य बन्धुं
नेत्रद्वन्द्वं तरुणि ! वहसीत्येवमुत्स्तोतुकामा ।
जोषं तिष्ठाम्यहह ! कमलज्ञानहीना यतस्त्वं
डेरा-ट्यूलिप्-प्रभृतिसुमनोदर्शनाद् धन्यजन्मा ’ ॥

४१.“-‘हासात् त्वत्काद् वदनरचिताज्जल्पकाले सखीभिर्
जृम्भे स्वीये कृत-नर-भये द्राङ्क्षणे च स्वकीये ।
लज्जालुः सत्यनिशमधुना सूकरी गर्वहीना
घोरारण्यद्रुमगणघनच्छायसंचारतृप्ता’ ॥

४२.‘कार्तज्ञ्येन प्रणमति मनो नाभिजातं मदीयं
काले विश्वप्रकटनपरे यः करेणुं ससर्ज ।
येन क्लेशः कविसमुदये दैवतो नैव जातस्
त्वत्साम्याढ्यं किमपि कुतुकात् वस्त्ववाप्तुं प्रवृत्ते’ ॥

४०.जोषं-स्पन्दनं यथा न स्यात्तथा।विदेशादागतानां डेरा-ट्यूलिप्प्रभृतीनां सुमनसां कुसुमानां दर्शनेन धन्यजन्मा।
४२.नाभिजातं-ब्रह्माणम्।विश्वप्रकटनपरे-विश्वज्ञानस्य सर्वत्र प्रसरणपरे काले, सृष्टिसमय इति यावत्।करेणुम्-गजस्त्रियम्।





४३.“-‘-‘न्यूनीभूतं कथमिदमये भस्म, मत्प्रेतभूमेर्’
एवं चिन्ताज्वलनशिखया दह्यमानान्तरात्मा ।
नेत्राणि त्रीण्यपि पशुपतिर्न्यस्य बाले ! मुखे ते
टाल्कम्-पौडर् मुखगतमभिप्रेक्ष्य चिन्तां जहाति’ ॥

४४.“-‘गन्धर्वीयां श्रवणसुखदां गानपीयूषधारां
वाणीयामप्यनितरसमां वल्लकीमैच्छमच्छाम् ।
स्वीयारावद्रुततरजितध्वाङ्क्षसंघे ! वरे ! यत्
तत्रागस्वाञ्छ्रवणविरहस्त्वत्कगीतस्य बाले ! ’ ॥

४५.“-‘स्वीये श्वैत्येऽप्यतिगमयितुं कान्तिमुग्रां तनोस्ते
कृष्णायां यो निशि गगनगः श्वेतभानुः स दर्शे ।
वैफल्येन क्षपितविभवः पूर्णिमायां पुनश्च
श्वेतीभूतो रचितविनयो वाञ्छति त्वत्प्रसादम्’ ॥

४३.टाल्कम्-पौडर्- Talcum Powder
४४.हे बाले! इति चतुर्थपादे संबुद्धिः।वाणीयाम्-वाणी-संबद्धाम्।वल्लकीम्-लक्षणया वल्लकीसमुद्भवं नादम्।ध्वाङ्क्षः-काकः।आगस्वान्-अपराधी।श्रवणविरहः-श्रवणाभावः।यदि तव निर्जित-काक-रवं गानमश्रोष्यं नाहं गन्दर्वगानवल्लकीनादौ अपैक्षिष्ये।वल्लकीनादश्रवणेच्छायां हेतुस्तव रवश्रवणाभावः।
४५.श्वेतभानुः-चन्द्रः।दर्शे-अमावास्यायाम्।यद्यपि अमावास्यायां कृष्णां त्वत्कान्तिमतिक्रमितुं चन्द्रः प्रयत्नं करोति,परन्तु विफलः सन् पुनः पूर्णिमायां श्वेत एव भवति।

४६.‘‘-‘एतावन्तं समयमितरे काव्यकर्मण्यभिज्ञास्
त्वत्सौन्दर्यं न निजकवने लान्ति यत् तद् व्यनक्ति ।
तेषामस्मिञ्जगति जननं पुण्यलेशेन हीनं
धन्यं जन्म स्फुरति किल मे त्वामहो वर्णयन्त्याः’ ॥

४७.‘‘-‘-‘द्वित्रान् वर्णान् विलिखितुमपि ज्ञानहीना सती त्वं
क्लिश्नासी’ति त्वयि दृढमधिक्षेपणं कुर्वते ये ।
दौर्भाग्यात्ते दधति न मतिं त्वत्कवीक्षालहर्यां
हस्तक्षेत्रप्रचुरधनवार्-वर्षणेऽब्दोपमायाम्’॥

४८.‘‘-‘नैरक्षर्यं न भवति पदानर्हताया निदानं
राष्ट्रेऽस्माकं तदधिकृतिकृद् योग्यताधिक्यहेतुः।

४६.एतावत्कालपर्यन्तमन्यैः कविभिस्त्वस्सौन्दर्यस्य कवितादि-रचनास्ववर्णितत्वे हेतुमाह-एतावन्तमित्यादिना।न लान्ति-न स्वीकुर्वन्ति।ला आदाने।
४७.त्वयि-तव विषये ।विषयसप्तमी।अधिक्षेपणं -निन्दाम्। निरक्षर-कुक्षिस्त्वम्।हस्त एव क्षेत्रं तत्र प्रचुरस्य धनरूपस्य वारः-वार्शब्दस्य षष्ठ्येकवचने पदरूपम्-वारिणः वर्षणे अब्दो-पमायां-मेघोपमायाम्।तव कटाक्षे निपतिते त्वं यथेच्छम् उत्कोचं दातुं समर्थाऽसीत्यजानानास्ते त्वं निरक्षरकुक्षिरिति निन्दां कुर्वन्ति।उत्कोचं प्राप्य ते निन्दामेतां त्यजन्तु, त्वां विद्यावतीं सर्वत्र घोषयन्त्वित्याकूतम्।
४८.निदानं-कारणम्।[अग्रे पुटेऽनुवर्तते......





एवं सत्यां वद तव कियान् ज्ञानगेहप्रवेशश्
चोरो निन्द्यः सति सुविभवे पश्यतोमारके किम् ?’ ॥

४९.‘‘-‘यस्याद्य त्वं जनगणपुरः कर्तुकामाऽपमानं
खिन्ना हस्ते, स न कुपितवान् योगशास्त्राद्यधीती ।
दुष्टो भावो हृदि सति न किं जन्म धत्ते ? कदाचित्
साधौ मार्गे रचितगतयः पाददोषात् स्खलन्ति’ ॥

५०.‘‘-‘यद्यप्यागः क्वथयति मनस्ते सदा हन्त, साधिं
तं जानीहि स्थिरतरमतिं क्षान्तिभव्यं तथापि ।
तस्मात् स त्वामतिकरुणया तत्प्रसादार्थनोत्कां
त्वादृग्लोकप्रसदनपटुर्मन्मुखेनेदमाह’- ॥

ज्ञानगेहे-विद्यालये । पश्यतोमारके-Bandit विश्वविद्यानि-लयेषु यः शैक्षिकः स्तरभङ्गस्तं विरुध्य बुद्धिजीविनः भाग्यवशा-दद्यत्वे पत्रिकासु भाषणादिषु च क्रोधं प्रदर्शयन्ति। परन्तु क्रोधस्य प्रकाशनं नालम्। अनर्हाणां विश्वविद्यानिलयेषु प्रवेशावकाश एव निषेध्य इति ममाभिप्रायः।
४९.सति-वरे।वरेऽपि हृदि कदाचिद् दुष्टभावजननरूपो दोषो भवति।कदाचिदिति मध्यमणिन्यायेन वाक्यद्वयेऽप्यन्वेति।मार्गे शुद्धेऽपि उच्चावचत्वहीने स्खलनहेतुः पाददोषः।
५०.आगः-अपराधः।आगोऽपराधो मन्तुश्चेत्यमरः। क्षान्त्या-क्षमा-गुणेन भव्याम्।प्रसाद+अर्थना+उत्काम्-प्रसन्नताविषयि-कायां प्रार्थनायाम् उत्कटमतिं त्वाम्।प्रसदने प्रसादे पटुः सन्।

५१."-'-'१.अग्नेर्दाहो २.वपुषि जनितः शोणितस्य प्रवाहः
३.भेदो घोरः शिरसि लगुडैस्ताडनाद्वा कथञ्चित् ।
कोऽप्येतेषां जयति न महाचण्डिके ! ताडनं ते ;
ब्रह्मास्त्राग्रे स्फुरति किमिषुप्रासकुन्तादि, युद्धे ?' ॥

५२."-'-'शश्वद् योगोत्कटदृढमना ध्यानमग्नोऽपि भक्त-
प्रीत्या लोकप्रणतिज-तपोभङ्गमङ्गीकरोमि ।
तस्मादद्य त्वयि विरचितोऽनुग्रहोऽयं मदीयः
स्युर्मत्पादद्वयनखरुचेः पाण्डराः शीर्षजास्ते' ॥

५३."-'-'प्रेमव्यक्त्यै मृदुलवचनं श्रीयते कैश्चिदज्ञैर्
अन्यैर्वाचा बहुलकलहो वाञ्छ्यते भावबन्धे ।
धन्यैर्घोरप्रकृतिभिरिलाकम्पमुत्पादयद्भिः
प्रीत्युन्मादक्षुभितमतिभिः श्रीयते बाहुयुद्धम्' ॥

५१.अग्नेः-अग्नि+ङस्। अग्नेर्दाहो वा रुधिरप्रवाहो वा शिर-स्ताडनं वा यां वेदनां जनयन्ति सा तव ताडन-जाताया वेदनाया अग्रे क्षुल्लकाः अपरिगणनीयाः।प्रासकुन्तौ आयुधविशेषौ।
५२.त्वयि मह्यं प्रणमन्त्यां मम नखकान्तिकारणात् तव कृष्णाः केशाः श्वेता भवन्तु।पाण्डराः-श्वेताः।रुचेः-रुचि+ङस्। शीर्ष-जाः-केशाः। तद्गुणानुप्राणिता पर्यायोक्तिः।
५३.प्रेम्णोऽभिव्यक्त्यै त्रयः सन्त्युपायाः-मृदुवचनं,परुषवचनं बाहुयुद्धं चेति।तत्र बाहुयुद्धं प्रशस्ततमम् एकान्तेन फल-दातृत्वात्। शस्ता-प्रशस्ता प्रकृतिः।इला भूमिः।





५४."-'-'श्वो वीक्ष्य त्वां हृदि मम कृपा जायते प्रायशो यत्
कष्टं ते स्यान्मम पदबिसालित्वसंप्राप्तियत्ने ।
अश्रान्तास्मन्नयनयुगलीदीप्तिरेखावपात-
स्पर्धालुस्त्रीसमुदयकृतादभ्रसंदर्भभूम्ना' ॥

५५."-"-'भक्ते! मा त्वं बिभिहि-'कुपितात् क्षिप्यते शापबाणो
देवाच्चेत् किं करणमुचितं स्यान्ममे-'त्युग्रचिन्ता ।
अस्मत्कीर्तिर्निखिलभुवनव्यापिका नीचकृत्य-
प्रीतस्वान्तेष्वभयवरदा किं न याता श्रुतिं ते ?' ॥

५६."-'-'हे वन्दारो! रमणि! युवते! लञ्चदानैः परीक्षा-
सूत्तीर्णत्वं तव न हि वयं रक्षिणोऽग्रे भणामः।
प्रातः प्राप्स्यस्यभयवचनं बाढमस्मन्मुखाब्जाद्
भीरो! बाले! करजसुषमारञ्जितास्मत्पदाब्जा' ॥

५७."-'-'अन्यत् कन्ये ! शृणु तव पितुर्वेतनेऽल्पेऽप्यकष्टं
नैकान् गेहान् स किल कुरुते राजराजाभिलष्यान् ।

५४.पदमेव बिसम्-कमलं तत्रालित्वं-भ्रमरत्वम्।अदभ्रम्-बहुलम्।
५५.वृत्तिः-मनोवृत्तिः।
५६.वन्दारो!-वन्दनशीले-श्वः करिष्यमाणवन्दने! इति यावत्। भयदे भयं कुर्वाणे,इदं च'रक्षिगेहे' इत्यस्य विशेषमम्। रक्षिणोऽग्रे In front of the police ।करजाः- नखाः।पर्यायोक्त्यङ्कारः।
५७.राजराजः कुबेरः।[अग्रे पुटेऽनुवर्तते......

एतन्मर्माप्रकटनवरे प्रार्थिते पूरयिष्ये
को वा देवो वरनरि वरं सुप्रसन्नो न दद्यात् ?’ ॥

५८.‘‘-‘-‘-‘प्राप्ते रम्ये वयसि कतिचिच्छैशवं रोचयन्ते-’
लोकज्ञानां सुवचनमिदं चारितार्थ्यं दधाति ।
आराद् रत्नं स्वयमुपनतं यत्तिरस्कृत्य, चित्तं
मौढ्योपेतं निखिलदिशमुद्घोषयस्यात्तभेरी’ ॥

५९.‘‘-‘-‘प्रायोऽन्यस्मिन् निहितहृदया त्वं जने प्रीत्यनर्हे
प्राक्पापीयं फलमनुभवस्यादरार्हं त्यजन्ती ।
मोदं याती सकृमिणि जले पूतिगन्धिन्यशुद्धे
पीयूषाढ्ये सरसि भवतात् सूकरी सादरा किम् ?’-’॥

६०.‘‘एवं प्रोच्य द्रुतमपसर क्रोधनायाः करस्थाद्
दण्डाच्छीर्षं यदि सखि! निजं मन्यसे रक्षणीयम् ।
आशीर्मेऽयं श्रवणसुभगः श्रूयतां-‘शासकीयान्
मा भूट्टोपि! क्षणमपि न ते मस्तकाद् विप्रयोगः’-’’॥

मर्मणो रहस्यस्य अप्रकटनरूपे वरे। वर-नरि-वरे नरि[=नृ+ङि]-मनुष्ये। लिङ्गमतन्त्रम्। वरं-कामनाम्।
५८.आरात्-समीपे। आराद्दूरसमीपयोरित्यमरः।
५९.सकृमिणि-कृमिसहिते। नान्तः कृमिन्शब्दः। (SanskritCorpus)
६०.क्रोधनायाः-अतिक्रोधशीलायाः। शासकीयान्-शासकीयात्।



# लोकालङ्कारपङ्क्तीयम्



# अलङ्कारनाम्नाम् अनुक्रमणिका

## लोकालङ्कारपङ्कीयगतानाम् अलङ्कारनाम्नाम् अकाराद्यनुक्रमणिका





# लोकालङ्कारपङ्कीयम्

**व्याजेनान्योपकारस्य स्वोपकारविचक्षणम् ।**
**लोकव्यवहृतिप्राज्ञम् अभिनन्दामि सादरम् ॥**
**अलङ्कारा यथा काव्ये स्वान्तसन्तोषदास्तथा ।**
**विद्धि लोकेऽपि लौकिक्या शतालङ्कारलीलया ॥**

### १.विरामावसानालङ्कारः

विश्रमस्य विरामावसानं नाशेन जायते ।
शङ्कुप्रहाराः सोढव्याः श्व आरभ्य पुनर्बत ॥

### २.पूर्वत्रासिद्धालङ्कारः

अज्ञाते प्राक् तु पूर्वत्रासिद्धालङ्कारवैभवम् ।
कुतन्त्रेषु तव प्रज्ञा न पूर्वं विदिता मया ॥

### ३.विसर्गालङ्कारः

स्वकीयवस्तुनस्त्यागे विसर्गालङ्कृतिर्मता ।
मद्यपानदुरभ्यासं वित्तस्फातेस्त्यजाम्यहम् ॥

१.विरामदिवसानन्तरं पुनर्विद्यालयं गन्तुं गत्यन्तराभावात् प्रवृत्तस्य विद्यार्थिन इयमुक्तिः। शङ्कुप्रहाराः=अध्यापकस्य प्रवचनानि।
३.वित्तस्फातेः-मूल्याधिक्यात्।

**४.प्रकृतिभावालङ्कारः**

तदा प्रकृतिभावः स्याद् यदा विकृतिवारणम् ।
क्रोधे च करुणायां च न तस्याकारविभ्रमः ॥

**५.अव्ययीभावालङ्कारः**

नाशाभावे गुणस्य स्यादव्ययीभावसंभवः ।
नोज्झसि त्वं श्मशानेऽपि श्वपुच्छर्जुत्वचापलम् ।

**६.चार्वाकालङ्कारः**

नृणामभीप्सा चार्वाकं मनोलड्डुकभक्षिणाम् ।
भक्त्या सकलमिष्टं नस्तुष्टा यच्छति देवता ।

**७.प्रमेयालङ्कारः**

प्रमेयमन्यमेकेन ज्ञातव्यांशस्य देशना ।
सर्वकारीयसंस्थानां जनक्लेशो मुदावहः ।

**८.करणालङ्कारः**

कार्यस्यासाधारणं यत् कारणं करणं हि तत् ।
अधिकारि-श्व-पुच्छस्य मर्दनेन तवोन्नतिः ॥

**९.अकारणालङ्कारः**

अकारणं कारणे सत्यपि तस्य निराकृतिः ।

५.धूर्तं सज्जनीकर्तुम् उपदेशादिना प्रवृत्तं प्रति कस्यचिदुक्तिरियम्।
९.देवतापूजाव्याजेन परगृहीयपुष्पाणि चोरयन्तं प्रति गृहस्थेन





किं ते छिन्नं ?'गुर्'करोषि द्वित्रपुष्पग्रहाद् गृहिन् !॥

**१०.स्याद्वादालङ्कारः**

अनिश्चिताभिप्रायेण स्याद्वादः स्याद् विकल्पनात् ।
हरिश्चन्द्रस्य पौत्रोऽयमथवा किं बकोद्यमः ॥

**११.बौद्धालङ्कारः**

बुद्धिप्राधान्ययुग्वाक्ये बौद्धालंकारकीर्तनम् ।
स्तुह्यद्य घूकलावण्यं काले जालं करिष्यसि ॥

**१२.शून्यालङ्कारः**

भानाभावोऽभ्युपायस्य शून्यता कठिनस्थितौ ।
नास्मिन् मरौ रामराज्ये किमपि प्रतिभाति मे ॥

(=गृह-स्वामिना) कृतायां निन्दायां देवभक्तलिङ्गिनः पुष्पचोरस्योक्तिरियम्। द्वित्राणां पुष्पाणां ग्रहात्-ग्रहणात्।

१०.नवीनाधिकारिविषये कार्यालयीयकायस्थानां संशयोक्तिः। तस्यानति-परिचितत्वादुत्कोचं स्वीकरोति वा न वेति अज्ञातत्वादेवं वचनम्।

११.स्तुह्यद्य घूकलावण्यम्=स्वकार्यसिद्ध्यर्थम् अधिकारिणम् अनुवर्तस्व।

१२.उत्कोचादीनामवैधव्यवहाराणां निपुणस्य यदाऽन्यत्र कार्यालय-शाखां प्रति स्थानान्तरणं कृतं तदा तस्मिन् स्थाने पूर्वस्थानवद् व्यवहर्तुमशक्नुवानेन तेनोच्चारितं सचिन्तं वाक्यमिदम्।

**१३.माध्यमिकालङ्कारः**

मिथो माध्यमिकं साधुर्व्यवहारो द्विदुष्टयोः ।
तस्मिन्नस्य स तस्यास्मिन् प्रयुङ्क्ते दैवदोहदम् ॥

**१४.स्वलक्षणालङ्कारः**

अनिर्देश्यं लक्षणं चेद् भवेत्तत्र स्वलक्षणम् ।
रुष्टोऽधिकारी हृष्टो वेत्यस्माभिर्ज्ञायतां कथम् ?॥

**१५.साङ्ख्यालङ्कारः**

वर्णनं संख्यया यत्र तत् साङ्ख्यमिति भण्यते ।
षड्वितस्त्युन्नतः कान्तो द्वात्रिंशद्दन्तसंयुतः ॥

**१६.प्रकृत्यलङ्कारः**

प्रकृतिर्देवदत्तीयस्वभावस्य निरूपणात् ।
किं त्वया वर्ण्यते काष्ठा ? सत्यं, सा हीनपल्लवा ॥

**१७.विकृत्यलङ्कारः**

अव्यवस्थितचित्तस्य वर्णने विकृतेर्जनिः ।

१३.दैवदोहदम्=अमुके वरे सिद्धे अमुकं वस्तु आराध्यदेवतायै समर्पयामीति भक्तस्य देवतां प्रति प्रतिज्ञा। एतदेव उपयाचितक-मित्यप्यभिधीयते। हरके इति कन्नडभाषायम्।
१६.काष्ठा=प्रस्तुतः प्रामाणिकोऽधिकारी। हीनपल्लवा= उत्कोचा-द्युत्पत्तिहीनो नीरसः।





सागसेऽपि स मेऽक्रुध्यन् दुर्वासाः किं करिष्यति ?॥

**१८.अननुगुणालङ्कारः**

उक्तिद्वयविरुद्धत्वं यदाऽननुगुणस्तदा ।
त्रिंशत्पुत्रवतो वृत्तिः कुटुम्बाङ्कनियन्त्रणा ॥

**१९.न्यायालङ्कारः**

न्यायपर्युनुयोगेन न्यायालंकारसंभवः ।
लञ्चं लात्वाऽपि मत्पुत्रं कुतो नैवोदतारयः ?॥

**२०.निर्विकल्पालङ्कारः**

ज्ञेयस्य निष्प्रकारस्य वचनं निर्विकल्पकम् ।
भिषग्लिखितकं शीर्ष-कुट्टनेनापि वेद्मि न ॥

**२१.वैशेषिकालङ्कारः**

एकस्यान्यद् विशेषस्य क्रमे वैशेषिकक्रमः ।
वृषभे केवलं शृङ्गौ व्याघ्रे दंष्ट्रा नखा अपि ॥

१७.सदाऽपि गुर्गुरायमाणोऽधिकारी कदाचित् सापराधेऽपि कार्या-लयोद्योगिनि तूष्णींशीलः सन् "किमन्यदापत्स्यत" इतिरूपं भयम् उत्पादयति। कोपशीलत्वं प्रकृतिरत्र। तद्विरुद्धत्वमेव विकृतिः।
१९.लञ्चं=उत्कोचम्। लात्वा=स्वीकृत्य। ला आदाने।
२०.लिखितकम्=कुत्सायां कन्।
२१.वृषभे =निम्नस्तरीयेऽधिकारिणि। शृङ्गौ= केवलमुत्कोचप्रियता। व्याघ्रे=उन्नताधिकारिणि। दंष्ट्रा नखा अपि=अधिकोत्कोचस्वीकार-

### २२.योगालङ्कारः

द्वयोर्विरुद्धयोर्मेलवर्णनं योग ईर्यते ।
अस्मत्कुदैवात् प्रारब्धः प्रेमा काकीदिवान्धयोः ॥

### २३.मीमांसालङ्कारः

अन्यवृत्तान्तगा चर्चा मीमांसेत्यभिधीयते ।
प्राज्ञोऽपि स व्यवहत, स्यात् किमप्यत्र गूढकम् ॥

### २४.उत्तरमीमांसालङ्कारः

प्रसंगोत्तरमीमांसा तन्नामालंकृतिर्मता ।
दग्धवृन्ताकवदनोऽकरोदारभटीं कुतः ? ॥

शीलता, दुष्टता च। निम्नस्तरीयादिकारिविषये आक्षेपं कर्तुमुन्न-ताधिकारिणं प्रति जिगमिषुं प्रति कस्यचिदुपदेशः। सः उन्नता-धिकारी एतदपेक्षया भ्रष्टतर इति भावः।

२२.परस्परं विरोधिनोरपि धूर्तयोर्मध्ये प्रवृत्तं स्नेहमालक्ष्य सातङ्कस्य कस्यचिदुक्तिः। "पूर्वमपि एतयोर्दुष्टयोः कारणादस्माकं क्लेशो-ऽभूदेव। अधुना तु एतौ मित्रीभूतौ। किं वा भविष्यति"इति शङ्कमान-स्य शङ्कायाः भावः।

२३.विवेकिनां विवाहाभावोऽविवेकिनां च विवाह इति विवेचकानां निर्णयः। विवेकिनाऽपि सता कृतः किल विवाहश्चर्चाविषयः।

२४.दग्धवृन्ताकवदनः=दग्धेन वृन्ताकेन सदृशं मुखं यस्य सः। अ-दर्शनीयं नीरसं च मुखमित्यर्थः। सत्यल्पापराधेऽनल्पं गर्हितवतोऽधिकारिणो विषये गर्हितस्योद्योगिन इतरेषामुद्योगिनां पुरस्तात् सकोपोक्तिरियम्। यद्यपि गर्हणं कर्तुर्मुखं म्लानं न





### २५.भगवद्गीतालङ्कारः

ऋषिवाक्यसमा वाणी भगवद्गीतमुच्यते ।
कोऽस्मि पक्वफलस्यास्य ? नन्विदानीं कलेर्युगम् ॥

### २६.अद्वैतालङ्कारः

अद्वैतं भिन्नराहित्यवर्णनं भिन्नवस्तुनोः ।
नान्या तस्मात् कार्यसिद्धिर्नान्या मुष्ट्या च खग्रहः ॥

### २७.मायालङ्कारः

माया विविधवेषैः स्वसुखमन्यप्रतारणा ।
श्मश्रुलोऽपूजि योगीति यः स मेऽपाहरद् धनम् ॥

### २८.निर्गुणालङ्कारः

लोकोचितगुणाभावे सति निर्गुणसंभवः ।
नासौ पिबति काफीं वा चायं वा पण्डितो जडः ॥

भवति, तथापि गर्हित उद्योगी अधिकारिणं दग्धवृन्ताकवदनं वदन् अधिकारिविषयकं स्वकोपमभिव्यनक्ति।

२५.कार्यसिद्ध्यनन्तरं प्रतिज्ञातस्योत्कोचस्य दानम् अकुर्वतो विषये तत्कार्यकारी एवं ब्रूते।

२६."कार्यसिद्धये किं देवदत्तस्य करे किञ्चिद् देयम् ?"इति सहसा प्रष्टारम् उत्कोचप्रदानाद्यनुभवहीनं मुग्धं प्रति सानुभवस्य जनस्यो-क्तिरियम्। दत्तेऽपि तस्मायुत्कोचे कार्यसिद्धिर्न शक्या, तस्यासामर्थ्या-दित्यभिप्रायः।

२८. प्रातःकाले कषायपानशीलैर्भारतीयैः टी पूर्वं 'कषाय'इति प्रायो-ऽभ्यधीयत। तस्मात् कषाय>क्षाय> चाय इति कल्प्याऽस्या निष्पत्तिः।

**२९.निर्विशेषालङ्कारः**

जननं निर्विशेषस्य विशेषप्रतिषेधतः ।
अश्वगर्दभयोर्भेदं न वेत्त्येष सपुच्छयोः ॥

**३०.अपरोक्षालङ्कारः**

आकारतो गुणज्ञानमपरोक्षमितीर्यते ।
दर्शनादेव सचिवं मयूरव्यंसकं ब्रुवे ॥

**३१.विशिष्टाद्वैतालङ्कारः**

द्वाभ्यां विशिष्टमद्वैतं विशिष्टाद्वैतसंज्ञकम् ।
विश्वामित्रोऽयमेवान्यशक्रसृट् स्थितशक्रहा ॥

**३२.ईश्वरालङ्कारः**

परश्रैष्ठ्यानुसंधानादीश्वरालङ्कृतिर्भवेत् ।

२९.कस्यचिन्महामूर्खस्याधिकारिणो विषये विवृण्वन् अन्येन बुद्धिमत्त्वेन भासमानेनाधिकारिणोपमिन्वन् "एष स इव न मूर्ख" इति च कथयन् कोऽपि सत्यं ज्ञातवता एवं ज्ञाप्यते। "स मूर्खःसन्नपि अर्हानर्हयोर्भेदं वेत्ति। एष तु तमपि न जानाति।" इत्यभिप्रायः।
३०.मयूरव्यंसकम्=धूर्तम्।
३१.उत्कोचं दातुम् अनङ्गीकुर्वतां जनानां वास्तविकानि साक्ष्यपत्राणि नाशयित्वा कृत्रिमं क्लेशप्रदं च लिखितसाक्ष्यम् उत्पादयितुः कायस्थस्य विषये क्लेशितस्य क्रुद्धस्य च जनस्योक्तिरियम्। "अन्यमिन्द्रं करिष्यामि लोको वा स्यादनिन्द्रकः"इति रामायणे।
३२.अल्पप्रमाणकोत्कोचसंपादनेऽप्यसमर्थस्य कस्यचिदधिकतरो-





तृणाय दन्तकण्डूर्मे त्वं पुनर्गजमग्रहीः ॥

**३३.जडालङ्कारः**

आत्मनैच्यानुसन्धानं जडालंकारसर्जकम् ।
लब्धायामप्युर्वरायां धिग् धिङ् मामकृषीवलम् ॥

**३४.अपृथक्सिद्ध्यलङ्कारः**

अपृथक्सिद्धिसंबन्धः सदा व्यक्तौ गुणस्थितिः ।
कं कदा पातयानीति राजकीय-नृ-धीः सदा ॥

**३५.द्वैतालङ्कारः**

द्वैतं वस्तुद्वये सम्यग् भेदव्यावर्णना मिथः ।
प्राड्विवाकः क्व ? सत्यं क्व ? महदन्तरमेतयोः ॥

**३६.सगुणालङ्कारः**

लोकयोग्यगुणास्तित्ववर्णने सगुणोद्भवः ।
मात्स्यन्यायाद् परैर्गिल्ये गिलाम्यन्यांश्च शक्तितः ॥

त्कोच-ग्रहणकुशलम् अधिकारिणं प्रति सासूयोक्ति-रियम्। दन्तकण्डूः=भूयान् क्लेशः। गजम्=अधिकोत्कोचम्।
३३.प्रागुत्कोचमादातुं कृतविकाङ्क्षः, उत्कोचदानेच्छौ जने अन्योत्कोचस्वीकर्तृसाहाय्येन स्वकार्यं साध्नुवति सति, स्वस्य विकाङ्क्षाम् अनुचितां भावयतः कस्यचित् स्वन्यक्कारोक्तिरियम्। उर्वरायां= प्रचुरोत्कोचदानसमर्थे पुरुषे सति। अ-कृषीवलम् =उत्कोचम् अ-स्वीकृतवन्तम्।
३५.प्राड्विवाकः= Advocate

**३७.भेदाभेदालङ्कारः**

भेदाभेदः क्वचिद् भेदे क्वचिच्चाभेदवर्णने ।
तयोः क्वचित् काकघूकं क्वचिन्निम्बकठिल्लकम् ॥

**३८.वैराग्यालङ्कारः**

लोकानुकम्पप्राप्त्यर्थं वैराग्यं दुःखडिण्डिमः ।
श्वो वा परश्वो मद्वार्ता पत्रिकासु प्रकाश्यते ॥

**३९.ज्ञानोत्पत्त्यलङ्कारः**

ज्ञानोत्पत्तिस्तदा भ्रान्तेर्नाशाद् ज्ञानं यदोद्भवेत् ।
अद्य ज्ञातं न चटको गृध्रोऽयं रुधिराशनः ॥

**४०.मोक्षालङ्कारः**

सक्लेशाद् बन्धनान्मुक्तिर्मोक्षालङ्कारदायिनी ।
समाप्ता मौसली धारा श्वभ्रान्मुक्तोऽस्मि दैवतः ॥

---

३७.काकघूकम्=शत्रुत्वम्। निम्बकठिल्लकम्=मैत्री। दुष्टयोः शत्रु-मित्रत्वभावोऽनभ्यूह्यकालिक इत्यर्थः।

३८.सर्वेषामनुकम्पप्राप्त्यर्थम् **आत्महत्यां कुर्व** इति घोषयितुः नाटकपटोः कस्यचिदुक्तिरियम्।

३९.चटकः=अल्पोत्कोचस्वीकर्ता। गृध्रः=अधिकोत्कोचस्वीकर्ता।

४०.केनचित् कृतमतिदीर्घं भाषणं श्रुत्वा विरसस्य, तद्भाषणसमाप्तौ च निर्वृतिमनुभवतः कस्यचिदुक्तिरियम्। मौसली धारा=कर्णारुन्तुदं भाषणम्। यथा उत्तरकादम्बर्यां चन्द्रापीडेन साकं वैशम्पायनम् अप्रतिनिवर्तितं श्रुत्वा क्रुद्धं शुकनासं प्रति तारापीडेन विहितं





**४१.भ्रमस्मृत्यलङ्कारः**

भ्रमस्मृतिः पुरा भ्रान्तभावस्य स्मरणं मतम् ।
पूर्वं त्वं सिंह इति भो ग्रामसिंह! व्यभावयम् ॥

**४२.अज्ञानालङ्कारः**

अज्ञात्वा जल्पनं यत्तदज्ञानालङ्कृतिप्रदम् ।
यापयेते मुदा कालं दम्पती कलहं विना ॥

**४३.भ्रान्तिनिवारणालङ्कारः**

विपर्ययज्ञानरोधक्रमो भ्रान्तिनिवारणम् ।
मयूर्याः सुन्दरी नासि त्वमुष्ट्र्याः सुन्दरीतरा ॥

**४४.निश्चयसंशयालङ्कारः**

सनिश्चयः संशयो यः स स्यान्निश्चयसंशयः ।
गजेन्द्रेऽस्मिन् बृहत्काये शुण्डा भवति वा ॥

**४५.वैखरीवारणालङ्कारः**

निषेधे वक्रवाक्यानां वैखरीवारणं मतम् ।
अलं ते काव्यभङ्गीभिः! स्पष्टं ब्रूहि हृदि स्थितम् ॥

---

यौवनविषयकमप्रासङ्गिकम् असंबद्धं च भाषणम्।

४३.उष्ट्र्याः-पञ्चम्यां रूपमिदम्। सुन्दरीतरा-तपप्प्रत्ययोऽत्र।

४४.नियुक्तस्य नूतनाधिकारिणो विषये कार्यालयस्थानां संशयोक्ति-रियम्। गजेन्द्रे=धूर्तत्वेन पूर्वमेव ज्ञाते। शुण्डा=अवैधानां कर्मणां सहनं साहाय्यकरणं वा।

**४६.हृदयङ्गमालङ्कारः**

आह्लादकगुणप्राप्तौ जायते हृदयङ्गमः ।
भ्राम्यमाणं तदीक्षस्व पुच्छं शाखामृगस्य यत् ॥

**४७.दोषालङ्कारः**

दोषस्य कीर्तनं दोषो गुणगौणत्वकारकः ।
वैयाकरणमूर्धन्यः सन्नप्यज्ञोऽसि लौकिके ॥

**४८.अहृदयङ्गमालङ्कारः**

असौन्दर्यस्य पर्याये भवेदहृदयङ्गमः ।
गायन्ती तरुणी दन्तान् दर्शयामास तुण्डजान् ॥

**४९.प्रसादालङ्कारः**

तुष्टिप्रकाशिका वाणी प्रसादः श्रोतृहर्षदा ।
करोष्णीकरणात् तुष्टः किं कार्यं करवाणि ते ? ॥

**५०.रसालङ्कारः**

आस्वादसुभगा रीतिर्जिह्वादिभिरसौ रसः ।
एषाऽभविष्यत् स्वाद्वी टी (Tea) नूनं निर्लवणा यदि ॥

**५१.नीरसालङ्कारः**

आस्वादविरहात् तुष्टिप्राप्त्यभावात्तु नीरसः ।

४९.करोष्णीकरणात्=उत्कोचदानात्। अन्यत्र कीदृशोऽयं व्यवहार इति नाहं जानामि। परन्तु, कन्नडभाषायां ‘‘कै बेच्चगे माडुवुदु’’ इति वाक्यखण्डेन निर्देश्या कुप्रसिद्धेयं प्रवृत्तिर्यस्या अर्थोऽयम्।





धिक् काफीं शर्करारिक्तां कर्तारं त्वां च धिक् पुनः ॥

**५२.रसाभासालङ्कारः**

स्पष्टं रसाभिधोल्लेखात् रसाभासो मतो यथा ।
अङ्गाराक्षो गर्जसि त्वं शृङ्गारं त्वयि भावये ॥

**५३.शृङ्गाराभासालङ्कारः**

व्यवहारकृतं प्रेम शृङ्गाराभास उच्यते ।
भवत्युपयमो नौ द्राक् सौधं मे दापय प्रिये ! ॥

**५४.करुणाभासालङ्कारः**

लोके शोकस्य नटनं करुणाभास उच्यते ।
हा! मृतो मातुलोऽन्यस्मै दायं निर्दिश्य लेखने ॥

**५५.हास्याभासालङ्कारः**

हास्याभासो हास्यहेतोरभावे यदि हास्यता ।
विकटभ्रुकुटिं क्रुद्धं त्वां दृष्ट्वा बहुधाऽहसम् ॥

**५६.वीराभासालङ्कारः**

धैर्याभावे धैर्यदम्भो वीराभास उदाहृतः ।
ताडितोऽस्म्यद्य तेन श्वो दारयिष्यामि तच्छिरः ॥

५२.क्रुद्धं जनं दृष्ट्वा भीतिलेशेनापि हीनस्य सोत्प्रासेयमुक्तिः।

५३.सौधं=Mansion।

५६.ताडनानुपदमेव ताडित एष ‘‘वीरः’’ताडकस्य शिरो न दारयति। किन्तु ‘‘श्वस्तच्छिरो दारयिष्यामी’’ति कत्थते!

**५७.रौद्राभासालङ्कारः**

उग्रतानटनं रौद्राभासः स्वोदरहेतुकः ।
भूताविष्ट इवोच्चैः स चुक्रोशान्नस्य घस्मरः ॥

**५८.रोषालङ्कारः**

अशक्यरोधादुत्क्रोधादुद्गारो रोष इष्यते ।
एतत् किं शाकवाणिज्यं कर्तुं रे तादृशं महत् ? ॥

**५९.भयानकाभासालङ्कारः**

भीतौ भयानकाभासो भीतिहेतोरनागमे ।
धीरोऽसि ! मस्तके कीटपातादेव बिभेषि यः ॥

**६०.भीत्यलङ्कारः**

निर्बन्धो भीतिजननो भीत्यलङ्कार उच्यते ।
कूटसाक्ष्यं न चेद् दद्याः ख्यापयामि कृतीस्तव ॥

**६१.बीभत्साभासालङ्कारः**

अकाण्डे या जुगुप्सा सा बीभत्साभास ईर्यते ।
भक्ष्ये सुमधुरे हन्त, मक्षिका पतिता मृता ॥

५७.भूताविष्ट इव। न तु भूताविष्ट एव। मुग्धजनवञ्चकोऽयम्। घस्मरः=अतिभक्षणशीलः। संप्रत्यपि ग्रमप्रदेशेषु भूतावेश-पिशाचादिकल्पनावन्तो वर्तन्ते।

५८.तादृशं महत्=अवैधं कर्म। अल्पोत्कोचेन अधिकमवैधं कर्म कर्तुं प्रेरितस्य कस्यचित् कोपोक्तिरियम्।





**६२.अद्भुताभासालङ्कारः**

अद्भुताभास आश्चर्यजनौ विफलता यदि ।
पद्भ्यां मङ्क्तुं जले यत्नं कृत्वा लीनः स हा! मृतः ॥

**६३.आश्चर्यालङ्कारः**

आश्चर्यं यत्र तत्र स्याद् विस्मयस्य प्रकाशनम् ।
"विवहस्वे"त्यनूढेभ्य ऊढो नोपदिशत्यसौ ॥

**६४.शान्ताभासालङ्कारः**

शमस्थायिस्थितेर्वेषः शान्ताभास उदाहृतः ।
बकः परात्परं गर्ते ध्यायत्यार्यपथे स्थितः ॥

**६५.अलंकारालङ्कारः**

अलंभावादलंकारः पर्याप्तः प्राज्ञसंमतः ।
उपवासव्रतायालं दशैव तव रोटिकाः ॥

**६६.अपर्याप्तालङ्कारः**

अपर्याप्तं भवेद् यत्र पर्याप्तिविरहो भवेत् ।
विफलं यच्छ मा रामं सफलं यच्छ रावणम् ॥

६२. हठयोगे निष्णातानात्मनो ख्यापयन्तः केचन "जले चलामो वयम् "इति कत्थन्ते। तेषामयं परामर्शः।

६३. अनूढं जनं प्रति "विवहस्व"इति उपदेशकरणदुरभ्यासः प्राय ऊढानां वर्तत इति प्रसिद्धम्। तद्दुरभ्यासराहित्यमेवात्र विस्मयहेतुः।

६६.रामं=अल्पोत्कोचम्। रावणम्=अधिकोत्कोचम्।

### ६७.निरलङ्कारालङ्कारः

वर्णनेन विना वाक्यं निरलङ्कारसंज्ञितम् ।
सन्ति स्थलेषूचितेषु सर्वाण्यङ्गानि ते प्रिये ॥

### ६८.सादृश्यालङ्कारः

उपमेयोपमाभावात् सादृश्यं वस्तुनोर्द्वयोः ।
श्वित्रैस्त्वदाननं शैलैर्ग्लौबिम्बमिव बन्धुरम् ॥

### ६९.अनुदात्तालङ्कारः

अनुदात्तोऽनुदाराया घटनायाः स्मृतिर्मता ।
स्थितोऽत्राभिनवो गान्धी पूर्वं योऽस्मानपीडयत् ॥

### ७०.समागमालङ्कारः

उपर्येकगुणस्यान्यगुणप्राप्तिः समागमः ।
शृगालः केवलं पूर्वं भल्लूकोऽप्यद्य सोऽभवत् ॥

---

६७.त्वं न सुन्दरीति तात्पर्यम्।

६८.प्रेयसीं प्रति कान्तस्योक्तिरियम्।श्वित्रैः=पोगण्डवयसि मुखे प्रायिकैः गण्डैः (=Pimples) ग्लौबिम्बम्=चन्द्रबिम्बम्।

६९.अभिनवो गान्धी=प्रामाणिकोऽधिकारी।अत्यपीडयत्=उत्कोचं न्यषेधत्।

७०.शृगालः=कुतन्त्रयोजनेन जनपीडकः। भल्लूकः=अधिकाररा-हित्यादल्पपीडकः।भल्लूकः=स एवाधुनाऽधिकारी तस्मादधिक-पीडकः।





### ७१.कण्टकावल्यलङ्कारः

या गुणानामनेकेषां व्यक्तिः सा कण्टकावलिः ।
स मार्जालब्रह्मचारी परदुःखेषु सुख्यति ॥

### ७२.निन्दालङ्कारः

शिलारोपणमन्येषु निन्दा स्वच्छिद्रगुप्तये ।
भ्रष्टत्वे तव शिष्योऽस्मि गलितस्य सुरस्य खात् ॥

### ७३.प्रशंसालङ्कारः

निन्दनीयप्रसंगेषु प्रशंसा स्तुतिरुच्यते ।
त्वमाप्नोः साधु !“पीएच्. डीं.”प्राचार्यपदमर्दनात् ॥

### ७४.ध्वन्यलङ्कारः

ध्वनिः शब्दसमुत्कर्षाच्छब्दवर्णनतोऽथवा ।
निष्पिष्टकर्णः शिशुकस्तोडीरागेण गायति ॥

### ७५.औचित्यालङ्कारः

औचित्ये देशकालादिस्थित्यर्हत्वस्य वर्णना ।
दक्षस्त्वया विना कोऽन्य एतादृशकुकर्मसु ॥

---

७१.समागमालङ्कारे प्राग् वर्तमानेन गुणेन साकम् इतरेषां गुणानां प्राप्तिः। कण्टकावल्यां तु युगपदनेकेषां गुणानामस्तित्वमिति भेदः।

७२.“त्वं भ्रष्टोऽसि” इति निन्दितवन्तं प्रति “मा मन्यस्वात्मानं हरिश्चन्द्रं, ममैतादृशो नैतिको भ्रंशस्तवैवोपदेशानुसारेण जात” इति निन्दित-स्योक्तिः।गलितस्य= पतितस्य।खात्=आकाशात्।

### ७६.अनौचित्यालङ्कारः

देशकालादिविषयेष्वनौचित्यमनर्हता ।
अज्ञोऽसि राजकीये त्वं ज्ञो भवान्यैः सुखोद्यमैः ॥

### ७७.रीत्यलङ्कारः

रीतिः कुटिलमार्गेण हृद्गतस्य प्रकाशनम् ।
रासभ्युष्ट्रीसमायोगरूपां तां दृष्टवानहम् ॥

### ७८.प्रायोऽलङ्कारः

सर्वसाधारणी लोकरीतिः प्रायसि दृश्यते ।
अध्यापकप्रवचनात् प्रायो जृम्भा विजृम्भते ॥

### ७९.सत्योक्त्यलङ्कारः

सत्यपर्यायवचनैः सत्योक्तिः स्याद् ध्रुवादिभिः ।
शीर्षं तेऽस्ति ध्रुवं, नैतत् क्रियावदिति च ध्रुवम् ॥

### ८०.अश्रद्धेयालङ्कारः

अश्रद्धेयं भवेद् यत्र श्रद्धोत्पत्तेरसंभवः ।
''जीवामि जनसेवार्थम्'' एम्.एल्.ए. एवमब्रवीत् ॥

---

७६.त्यागपत्रदानं, हठात् तस्योपसंहारः, पुनश्च त्यागपत्रप्रदानम् पुनरपि तस्योपसंहारः,एवं त्यागपत्र-प्रदाननाटकम् अनेकशः कुर्वतो विषये प्रष्टारं मुग्धं राजकीयपुरुषं प्रति अनुभवशीलस्य जरद्राजकीयपुरुषस्य सानुकम्पोक्तिरियम्।





### ८१.असत्यालङ्कारः

असत्यमतथावाणी सदा प्रत्यक्षबाधिता ।
मन्मथस्य तयोक्तस्य वीक्षणादन्धता वरम् ॥

### ८२.भाषणालङ्कारः

भाषणं यन्न लोकार्हं भाषणस्यैव भूषणम् ।
सत्यं वद चराहिंसां मा द्वेषं कुरु कस्यचित् ॥

### ८३.आडम्बरालङ्कारः

आडम्बरो घोषणायां महाटोपो भयङ्करः ।
भारतीयाः प्रजा धन्याः कुटुम्बसुखसंपदा ॥

### ८४.आश्वासनालङ्कारः

आश्वासना प्रतिज्ञा या दुःशकस्याशकस्य वा ।
निर्मास्ये स्वर्णदोलां वः पीठे मय्युपवेशिते ॥

### ८५.संकल्पालङ्कारः

संकल्पो मनसो मिथ्याप्रतिज्ञा कर्मदुर्घटा ।
काफिपानं त्यजाम्यस्मादूर्ध्वं यद् रोगकारणम् ॥

---

८१.कन्यया स्वप्रियो मन्मथ इति यो निर्दिष्टः स तथा कुरूपो यथा तद्दर्शनादन्धता वरम्।
८३.'कुटुम्बव्यवस्था भारतीयेषु दृढा,तस्मादाधुनिके प्रपञ्चे सर्वथा सुखवत्तमास्तु भारतीया एवे'ति विश्वस्मिन् मर्दलः।गप्पमेतत्।
८४.निर्वाचनकालिकं भाषणमिदम्।

**८६.मिथ्याविषादालङ्कारः**

मिथ्याविषादः सन्तोषे विषादविशदीकृतिः ।
तन्मृतेर्महती हानिर्भारतस्य बतोदभूत् ॥

**८७.दम्भालङ्कारः**

स्वोन्नतिख्यापनप्रीतिर्दम्भालङ्कार इष्यते ।
आसीत् पितामहः सर्वशास्त्रपारंगतो मम ॥

**८८.नाटकालङ्कारः**

नाटकालंकृतिर्मिथ्यानिजसद्गुणघोषणा ।
न मौल्यमस्ति सत्यस्य येन मे गतिरीदृशी ॥

**८९.आशीरलङ्कारः**

आशीर्या शासकीयानां सैवाशीः कर्मकारिणाम् ।
मृषीष्ट नायकः कोऽपि लप्सीष्ट विरतिश्च नः ॥

---

८७.अहं मूर्ख इति तात्पर्यम्।
८८.अवैधकार्येष्वचतुरस्य, अवैधकार्यनिपुणान् सम्पद्युक्तान् दृष्ट्वा स्वतिरस्कारेण परासूयया च युक्तस्य वचनमिदम्।
८९.सर्वकारीयोद्योगिनाम् आशीरियम्।विरतिः=विरामः। यस्मिन् कस्मिन्नपि नायके निधनमुपगते, कार्यालयस्य विरामो घोषितः सन् मृतस्य जनस्य श्रद्धाञ्जलिं सूचयतीति राजकीयानां जनानां मौढ्यम्।एतद् विरुध्य तत्र तत्राद्यत्वे प्रजाः क्रोधं प्रदर्शयन्तीति राष्ट्रे विवेकोदयं व्यनक्ति।





**९०.रोधालङ्कारः**

आशानिरोधघटना रोधालङ्कृतिकारणम् ।
यून्यस्मिंश्चुम्बनोद्युक्ते साऽदात् कन्या चपेटिकाम् ॥

**९१.रोगसंभावनालङ्कारः**

रोगसंभावनोद्गारो रोगसंभावनोच्यते ।
क्षिप्तं किं ते शिरो ? यस्मादसंबद्धानि जल्पसि ॥

**९२.व्यवहारालङ्कारः**

व्यवहारः प्रपञ्चस्य व्यवहारेषु देशना ।
लिम्पाभीष्टस्य सिद्ध्यर्थमधिकारिमुखे घृतम् ॥

**९३.संकोचालङ्कारः**

संकोचो हृदये लज्जा भावस्य प्रकटीकृतौ ।
अर्थी पश्यति कायस्थं कायस्थो वीक्षतेऽर्थिनम् ॥

**९४.प्रत्यूहालङ्कारः**

प्रत्यूहः कार्यसिद्धौ यः क्लेशः सोऽयं समीक्ष्यते ।
हरिश्चन्द्र-सगोत्रोऽयं किमहं करवाण्यरे ? ॥

---

९३.किन्तु स्पष्टम् उत्कोचप्रस्तावं न कुर्वाते, विकाङ्क्षावशात्।
९४.नियुक्तं नूतनाधिकारिणं दृष्ट्वा उत्कोचसमुद्रनिमग्नस्य धूर्तस्य सचिन्तोक्तिरियम्।हरिश्चन्द्र-सगोत्रः=उत्कोचस्य सर्वथा निषेद्धा प्रामाणिकोऽधिकारी।

**९५.परस्परभावनालङ्कारः**

मिथो भुजास्फालनं यत् तत् परस्परभावनम् ।
देहि मेऽत्तुं त्वमप्यद्धि बाहूबाहवि माऽस्तु नौ ॥

**९६.तुच्छालङ्कारः**

तुच्छमप्रकृतान्नीचं प्रकृतं वर्ण्यते यदि ।
श्रद्धायुतायां सेवायां श्वभिर्न सदृशा नराः ॥

**९७.सामालङ्कारः**

आत्मकार्यार्थमन्यस्य साम मिथ्याभिशंसनम् ।
काले वर्षति पर्जन्यस्त्वादृशां हि सतां स्थितेः ॥

**९८.प्रलोभनालङ्कारः**

प्रलोभनं स्वकार्यार्थं दानालङ्कार इष्यते ।
ख्यापयामि न ते छिद्रं मत्पुत्रं कुरु शिक्षकम् ॥

**९९.भेदालङ्कारः**

स्वकार्यार्थं परश्रद्धानाशो भेदो निगद्यते ।
मद् ऋतेऽन्यो धनस्वीकृदधिकारी तु ख-ग्रही ॥

९५.प्रामाणिकताधर्मविषये भाषमाणं प्रति उत्कोचपारावरपारीणस्य नीतिकथनमिदम्। अत्तुं=भक्षयितुम्। अद्धि=भक्षय।
९९.स्वं त्यक्त्वाऽन्यत्र स्वकार्यसिषाधयिषून् प्रति अधिकारिणः गर्वोक्तिरियम्। आदत्तोत्कोचेनापि मदन्येनाधिकारिणा अर्थिनां कार्यं साधयितुं न शक्यते, तस्य तत्रासामर्थ्यात्। अहमेवेतादृशकर्मसु





**१००.स्मितालङ्कारः**

प्रतिकूलपरिस्थित्यां स्मितं दन्तप्रदर्शनम् ।
गङ्गानुग्रहपूर्णेऽस्मिन् राजसौधे सुखं तव ॥

**१०१.सूत्रालङ्कारः**

आकूतस्फोरणं सूत्रमाङ्गिकाभिनयैर्मनाक् ।
'क्रेयाणि देहि मे शुद्धानी'त्युक्तो दिविरोऽहसत् ॥

**१०२.भाष्यालङ्कारः**

गीः क्रोधनिबिडा भाष्यं क्लेशितास्याद् विनिःसृता ।
अभिनव्याज्जनेयानां पितरो बन्धवो मम ॥

समर्थ इति तात्पर्यम्। खग्रही= आकाशं ग्रहीतुं क्रियमाणप्रयत्नः, अर्थात्,अनुत्पद्यमानकार्यसिद्धिः।
१००."त्वया प्रदर्शितेऽस्मिन् गृहे छदिषः जलं स्रवति"इति आक्षेप्तारं प्रति तस्मै भाटकगृहं प्रदर्शयितुः प्रतिनिधेः (agent)इयम् उक्तिः।
१०१.दिविरः=वणिक्। शब्दोऽयं क्षेमेन्द्रस्य कृतिषु लभ्यते। अन्यत् स्पष्टम्।
१०२. अनिरीक्षितं यथा स्यात् तथा स्वगृहं स्वपुत्रैराक्रम्य अदृष्ट-निजपुत्रकापेयत्वम् अभिनयतां, स्वपुत्रप्रशंसामेव च कुर्वतां पितृणां निर्गमनानन्तरं तत्पुत्रकृतकोलाहलारभट्यादिनिर्विण्णस्य गृह-स्वामिन उक्तिरियम्। अनिरीक्षितं यथा स्यात्तथा गृहं प्रविश्य गृहस्वामिनां क्लोशोत्पादनं भारतीयायां संस्कृतौ कलङ्कः।

### १०३.व्याख्यालङ्कारः

व्याख्यानं गीर्हताशस्य घटनोत्पत्त्यनन्तरम् ।
दुर्विधिं वक्ति राष्ट्रस्य तेषां निर्वाचने जयः ॥

### १०४.वृत्त्यलङ्कारः

वृत्तिरित्युच्यते विज्ञैर्जीवनं मृतिकालिकम् ।
श्रुत-त्वत्कविताकेऽपि प्राणा मयि वसन्त्यमी ॥

### १०५.देशनालङ्कारः

स्वलाभार्थं हितोक्तीनां स्फोरणं देशनोच्यते ।
ममैवापणमेहि त्वं वञ्च्यसेऽन्यापणे कुतः ? ॥

### १०६.नवीनयोगालङ्कारः

नवीनयोगः सर्वत्र प्रसृता योगदेशना ।
शय्यायां शयनं निद्रा कुर्च्यां तन्द्रा तु निर्वृतिः ॥

### १०७.शान्त्यलङ्कारः

शान्तिरध्यात्मकेन्द्रेषु ध्यानशिक्षणनाटकम् ।
ध्यायस्वार्पितसंपत्तिः समाधिस्ते भविष्यति ॥

---

१०३.निर्वाचने जयं प्राप्तवतां विषये निर्वाचने पराजितस्योक्तिरियम्।

१०६.अद्यत्वे 'अमुकयोगः','अमुकयोगः'इति विविधनामभिर्योगस्य (ध्यानस्य?)"गुरवः" प्रायो भारते यदुपदिशन्ति तस्य सारोऽयम्।





### १०८.प्रभुसंमितालङ्कारः

प्रभुसंमितमुत्क्रोधाद् गर्जनं निष्प्रयोजनम् ।
शाखामृगा द्रुमं यान्तु गृहे योग्या न यत्स्थितिः ॥

### १०९.सुहृत्संमितालङ्कारः

मैत्री क्लिष्टपरिस्थित्यां सुहृत्संमितमुच्यते ।
अलाभे वस्तुनोऽन्यस्य शिक्षणे कुरु भाषणम् ॥

### ११०.कान्तासंमितालङ्कारः

उपदेशो लोकनीतेः कान्तासंमितसंज्ञितः ।
नरः स इव वर्तेत सौधकृद् योऽल्पवेतनः ॥

### १११.खोक्त्यलङ्कारः

खोक्तिः सा गीस्त्रपां या द्राक् सृजत्यतिशयोक्तिषु ।
इङ्ग्लीष्ज्ञानेन सार्वज्ञ्यं लीलया सिद्ध्यति ध्रुवम् ॥

---

१०८.पूर्वसूचनां विनैवाऽऽगत्याऽनल्पं क्लेशप्रदानां बन्धूनां 'लाल्यैर्वत्सकैः' कृतेभ्यः कापेयेभ्यश्चीत्कृतेभ्यश्च क्रुध्यतो गृहस्वामिनाम्नो मनुष्यविशेषस्य व्यर्थं द्राङ्क्षणमिदम्। उत्क्रोधात्-उद्बुद्धादतिकोपात्।

१०९.मैत्री=लक्षणया मैत्रीयोग्यं मार्गदर्शनम्। शिक्षणे=शिक्षण विषये। विषयसप्तमी।

१११.खोक्तिः=ख+उक्तिः। खम्-शून्यमाकाशश्च।यद्यपि प्राप्तेङ्ग्लीष्भाषाज्ञानाः सर्वेऽपि सार्वज्ञ्यं नाभिनयन्ति। परन्तु **केचन** पठितकतिपयेङ्ग्लीष्भाषारचितदर्शनग्रन्थास्तादृशा मया दृष्टाः।

**११२.लक्षणालङ्कारः**

अ-त्रिदोषः प्रमेयस्य धर्मो लक्षणमुच्यते ।
दण्डादण्डि महाघोरं दम्पत्योः प्रेम लक्ष्यते ॥

**उपसंहारः**

**इत्येवं लोकवृत्तान्तसंदोहसुभगोदयम् ।**
**लोकालङ्कारपङ्क्तीयं जगन्नाथाभिधो व्यधात् ॥**

**निजयत्नाभिधो देवो नान्यो यस्य महागुरुः ।**
**जगन्नाथस्य तस्योक्तिर्जनतां हासयेदियम् ॥**

११२.दम्पत्योरनुरागनिबिडव्यवहारः प्रेमत्वावच्छिन्नत्वाभाववान्। वास्तविके तु तयोः प्रेम्णि समवायसंबन्धावच्छिन्नदण्डादण्डित्वावच्छिन्नदण्डादण्डिनिष्ठाधेयतानिरूपिताधिकरणतावत्त्वं वर्तत इति, (इदम् असंभवनिवारणाय) स्वानुभवपूर्वकं **मया** निर्धारितत्वादिदमेव अव्याप्त्यतिव्याप्त्यसंभवेतिदूषणत्रयरहितधर्मरूपं लक्षणम्। पश्यतोमाराणां (Goons or Hooligans) व्यवहारेषु अतिव्याप्तिनिवारणाय महाघोरमित्युक्तम्। पिशाचानां व्यवहारेषु अतिव्याप्तिनिवारणाय दण्डादण्डीत्युक्तम्।